# कुमारसम्भवम्।

——o——

सप्तमसर्गान्तम्

महाकवि-श्रीकालिदासकृतम्।

श्रीमल्लिनाथसूरिविरचितया सञ्जीवनी-

समाख्यया व्याख्यया

सहितम्।

चतुर्थ संस्करणम्।

———

कलिकाता राजधान्यां

निमतला घाट ष्ट्रीट, ८ संख्यक भवने

श्रीयुत वावु भुवनचन्द्र वसाकेन प्रकाशितम्।

२।१ नम्बर वाग्बाजार ष्ट्रीट, मणिराम यन्त्रे

श्रीपूर्णचन्द्र चक्रवर्त्तिना

मुद्रितम्।

१२९१ साल।

মূল্য ৷৹ বার আনা।

# कुमारसम्भवम्।

सप्तमसर्गान्तम्

## महाकवि-श्रीकालिदासकृतम्।

श्रीमल्लिनाथसूरिविरचितया सञ्जीवनी-

समाख्यया व्याख्यया

सहितम्।

चतुर्थं संस्करणम्।

---


कलिकाता राजधान्यां

निमतला घाट ष्ट्रीट् ८ संख्यक भवने

श्रीयुत बाबु भुवनचन्द्र वसाकेन प्रकाशितम्।

२।१ नम्बर बाग्बाजार ष्ट्रीट् मणिराम यन्त्रे

श्रीपूर्णचन्द्र चक्रवर्त्तिना

मुद्रितम्।

१२८१ साल।

# कुमारसम्भवटीका

# सञ्जीवनी ।

---

## मङ्गलाचरणम् ।

मातापितृभ्यां जगतो नमो वामार्द्धजानये ।
सद्यो दक्षिणदृक्पातसङ्कुचद्वामदृष्टये ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥
शरणं करवाणि शर्मदं ते चरणं वाणि! चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब! कृतार्थसार्थवाहम् ॥

## प्रतिज्ञा ।

इहान्वय मुखेनैव सर्व्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति ॥

# कुमारसम्भवम्।

---

## प्रथमः सर्गः।

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥१॥

तत्र भवान् कालिदासः कुमारसम्भवं काव्यं चिकीर्षुः आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमिति शास्त्रात् काव्यादौ वक्ष्यमाणार्थानुगुणं वस्तु निर्दिशति।

अस्तीति। उत्तरस्यां दिशि। अनेनास्य देवभूमित्वं सूचयते। देवता आत्मा अधिष्ठाता यस्य सः। एतेनाऽस्य वक्ष्यमाणमेनकापरिणयपार्वतीजननादिचेतनव्यवहारयोग्यत्वसिद्धिः। हिमस्यालयः स्थानमिति। हिमालयो नाम हिमालय इति प्रसिद्धः। अधिको राजा अधिराजः॥राजाहःसखिभ्यष्टच् न गच्छन्तीति नगाः अचलाः तेषामधिराजो नगाधिराजः

यं सर्वशैलाः परिकल्प्य वत्सं

मेरौ स्थिते दोग्धरि दोहदक्षे।

अस्ति। कथम्भूतः पूर्वापरौ प्राचप्रपश्चिमौ तोयनिधौ समुद्रौ वगाह्य प्रविश्य। अतएव पृथिव्याः भूमे र्मानं हस्तादिना परिच्छेदः। भावे ल्युट्। तस्य दण्डः। यद्वा मीयतेऽनेनेति मानः करणे ल्युट्। स चासौ दण्डश्च स इव स्थितः आयामपरिच्छेदकदण्ड इव स्थित इत्यर्थः। पूर्वापरसागरावगाहित्वञ्चास्य हिमालयस्यास्त्येव। उक्तञ्च ब्रह्माण्डपुराणे। कैलासो हिमवांश्चैव दक्षिणे वर्षपर्व्वतौ। पूर्व्वपश्चायतावेतावर्णवान्तरुपस्थितौ। अत्र हिमाचलस्योभयार्णव्याप्तिसाम्यान्मानदण्डत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः। प्रकृते अप्रकृतगुणक्रियादिसम्बन्धादप्रकृतत्वेन प्रकृतस्य सम्भावनमुत्प्रेक्षेत्यलङ्कारसर्वस्वकारः। अस्मिन् सर्गे प्रायेण वृत्तमुपजातिः क्वचिदिन्द्रवज्रोपेन्द्रवज्रे च। तल्लक्षणन्तु स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा जतजास्ततोगौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति ॥ १॥

इतः परं षोड़शभिः श्लोकै र्हिमाद्रिं वर्णयति तत्र नगाधिराजत्वं निर्वोढुमाह यमिति। सर्वे च ते शैलाश्च सर्व्वशैलाः। पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेनेति समासः। यं हिमालयं

भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥

वत्सं परिकल्प्य विधाय दोहदक्षे दोहनसमर्थे मेरौ दोग्धरि स्थिते सति। यस्य च भावेन भावलक्षणमिति सप्तमी। पृथुपादिष्टां पृथुना वैन्येन उपदिष्टाम् दुहेत्कया प्रदर्शितां धरित्रीं गोरूपधरामिति शेषः। गोभूत्वा तु वसुन्धरेति विष्णुपुराणात्। अकथितञ्चेति कर्मत्वम्। भास्वन्ति च भास्वत्यश्च भास्वन्ति दुग्रतिमन्ति ओषधिविशेषणञ्चैतत्। नपुंसकमनपुंजाति श्रेष्ठ वस्तूनि च। रत्नं श्रेष्ठमनावपीति विश्वः सकेनैतयादिना नपुंसकैकशेषः। रत्नानि मणीन् जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते इति यादवः। महौषधीश्च सञ्जीवनी प्रभृतीश्च चीरत्वेन परिणता इति शेषः। ताः चीरपरिणामिनीरिति विष्णुपुराणात्। दुदुहुः। दुहियाचीत्यादिना द्विकर्मकत्वम्। अत्र प्रयोजकत्वेऽपि शैलानां पञ्चभि र्हलैः कर्षति ग्रामं ग्रामणीरितिवत् तत्समर्थाचरणात्कर्तृत्वेन व्यपदेशः। दुहेः स्वरितेत्त्वेऽप्यकर्त्रभिप्रायविवक्षायां परस्मैपदम्। अत्रार्थे प्रमाणम्। गौर्भूमिरचला सर्वे कर्तारोऽत्र पयांसि च। ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च। वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिरिति। एतेन वत्सस्य

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥३॥

मातुः प्रेमास्पदत्वादस्य सारग्राहित्वङ्गम्यते ॥ तथा-चास्य नगस्य रत्नविशेषभोक्तृत्वान्नगाधिराजत्वं युक्त-मिति भावः । अत्र हिमवद्वर्णनस्य प्रकृतत्वात् तद्गतौ-षधिरत्नानां द्वयानामपि प्रकृतत्वात्तेषां दोहनक्रिया-रूपसमानधर्म्मसम्बन्धादौपम्यस्य गम्यत्वात्केवलप्राक-रणिकविषयस्तुल्ययोगितानामालङ्कारः । तदुक्तं प्रस्तुतानां तथान्येषां केवलं तुल्यधर्म्मतः । औपम्यङ्ग-म्यते यत्र सा मता तुल्ययोगिता । न चात्र रूपक-परिणामाद्यलङ्कारशङ्का कार्य्या तेषामायोपहेतुत्वात् हिमहेमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्ध-त्वेनानारोप्यमाणत्वादिति ॥ २ ॥

ननु हिमदोषदूषितस्य तस्यातयन्तमनभिगम्यत्वा-त्किलिण इव सर्वमपि सौभाग्यं विफलमित्याशङ्क्याह ।

अनन्तेति । प्रभवत्यस्मादिति प्रभवः कारणम् । अनन्तानामपरिमितानां रत्नानां श्रेष्ठवस्तूनां प्रभवस्य यस्य हिमाद्रेर्हिमं कर्त्तृ सुभगस्य भावः सौभाग्यम् । हृद्भगसिन्ध्वन्ते पूर्वपदस्योभयपदवृद्धिः । तद्विलुम्प-तीति सौभाग्यविलोपि सौन्दर्य्यविघातकं न जातं

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ॥४॥

नाभूत् ॥ तथाहि एको दोषः गुणसन्निपाते इन्दोः किरणेष्वङ्क इव निमज्जति अन्तर्लीयत इत्यर्थः । न हि स्वल्पो दोषोऽमितगुणाभिभावकः किन्तु कश्चि-दिन्दुकलङ्कादिवद्गुणैरभिभूयते अन्यथा सर्वरम्य-वस्तुहानिप्रसङ्गादिति भावः । अत्रोपमानुप्राणितोऽ-र्थान्तरन्यासालङ्कारः । तल्लक्षणन्तु ज्ञेयः सोऽर्थान्तर-न्यासो वस्तु प्रस्तुतन्त्र किञ्चन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुन इति दण्डी ॥ ३ ॥

यश्चेति । किञ्चेति चकारार्थः । यो हिमाद्रिः अप्सरसां विभ्रममण्डनानि विलासालङ्कारणानि । अथवा विभ्रमो विपरीतन्यासः विभ्रमस्त्वरया काले भूषास्थानविपर्ययश्च इति दशरूपकात् । तेन मण्ड-नानि तेषां सम्पादयित्रीम् । एतद्धातुरागदर्शिन्योऽ प्सरसः सन्ध्याभ्रमेण प्रसाधनाय त्वरयन्तीति भावः । तथात्वे भ्रान्तिमदलङ्कारो व्यज्यते । कर्तृकर्मणोः कृतीति कर्मणि षष्ठी । वारीणां वाहकाः बलाहकाः पृषोदरादित्वात्साधुः । तेषां छेदेषु खण्डेषु वि-भक्तः सङ्क्रमितो रागो यया ताम् । एतेनाद्रेरभ्र-

आमेखलं सञ्चरतां घनानां
छायामधः सानुगतां निषेव्य।
उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥५॥

त्वं गम्यते। इदं विशेषणद्वयं सन्ध्यायामपि योजनम्। धातवः सिन्दूरगैरिकादयोऽस्य सन्तीति धातुमान्। नित्ययोगे मतुप्। तस्य भावः धातुमत्ता ताम्। धातुयोगित्वमिति सम्बन्धोऽपि वाच्यार्थः। समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेनेति वचनात् लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः। अकालसन्ध्यामिव अनियतकालप्राप्तसन्ध्यामिव शिखरैः बिभर्ति धत्ते। अत्र सन्ध्याशब्दस्य जातिवाचित्वाज्जात्युत्प्रेक्षा ॥ ४ ॥

आमेखलमिति सिद्धाः अणिमादिसिद्धाः देवयोनिविशेषाश्च पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनय इत्यमरः। आ मेखलाभ्यः आमेखलं नितम्बपर्यन्तम्। मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोरिति विश्वः। आङ् मर्यादाभिविध्योरित्यव्ययीभावः। सञ्चरतां घनानां मेघानाम् अधः सानूनि मेघमण्डलादधस्तटानि गतां प्राप्ताम्। द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति समासः। छायामनातपम्। छाया सूर्यप्रियाकान्तिप्रतिबिम्बमनातप-

पदं तुषारस्रुतिधौतरक्तं
यस्मिन्न दृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तै
र्मुक्ताफलैः केशरिणां किराताः ॥६॥

न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।

नित्यमरः । निषेव्य दृष्टिभिरुद्वेजिताः क्षोभिताः सन्तः । उद्वेगस्तिमिते क्षोभे भये मन्थरगामिनीति शब्दार्णवे । यस्य हिमाद्रेः आतपवन्ति सातपानि शृङ्गाणि आश्रयन्ते आश्रित्य स्थिता इत्यर्थः । अतिमेघमण्डलमस्त्यत्रेति भावः ॥५॥

पदमिति । यस्मिन्नद्रौ किराताः तुषारस्रुतिभिर्हिमनिष्यन्दैः धौतं क्षालितं रक्तं शोणितं यस्य तत् तथोक्तम् । अतो दुर्ग्रहमिति भावः हताः द्विपाः गजाः यैस्तेषां हतद्विपानां केशरिणां सिंहानां पदं पादप्रक्षेपस्थानमदृष्ट्वापि नखरन्ध्रैर्नखछिद्रैर्विमुक्तैर्मुक्ताफलैर्मार्गं विदन्ति जानन्ति । अत्र व्याधाः सिंहघातिनो गजेन्द्राश्च मुक्ताकरा इति भावः । करीन्द्रजामूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्युद्भवमेव भूरि ॥६॥

न्यस्तेति । यत्र हिमाद्रौ धातुरसेन सिन्दूरादि-

व्रजन्ति विद्याधरसुन्दरीणा-
मनङ्गलेखक्रिययोपयोगम् ॥७॥
यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन ।

द्रवेण । श्रृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस इत्यमरः । न्यस्ताक्षराः लिखितवर्णाः अतएव कुञ्जरस्य ये बिन्दवः काये वयोविशेषभाविनः पद्मकाख्याः पद्मकं बिन्दुजालकमित्यमरः । त इव शोणाः रक्तवर्णाः लिखितभागेष्विति शेषः ॥ भूर्जत्वचः भूर्जपत्रवल्कलानि । भूर्जपत्रो भुजो भूर्जो मृदुत्वक् चर्म्मिका अपीति यादवः । विद्याधरसुन्दरीणाम् । लिख्यन्ते येषु ते लेखाः पत्रिकाः अनङ्गस्य लेखाः तेषां क्रियया कामव्यञ्जकलेखकरणेनेत्यर्थः । उपयोगमुपकारं व्रजन्ति । दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः ॥७॥

य इति ॥ यो हिमाद्रिः दरी गुहा सैव मुखं तस्मादुत्थेन उत्पन्नेन । आतश्चोपसर्गे इति कप्रत्ययः । समीरणेन वायुना कीचकाः वेणुविशेषाः ॥ वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः इत्यमरः । तेषां रन्ध्रभागान् छिद्रप्रदेशान् पूरयन् धमयन् । वांशिकोपि वंशरन्ध्राणि मुखमारुतेन पूरयतीति प्रसिद्धिः । उद्गास्यतां देवयोनित्वादुच्चैर्गान्धारग्रामेण

उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥८॥
कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम्।

गानं करिष्यताम्। उक्तञ्च नारदेन। षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिरिति। किन्नराणां देवगायकानां तानप्रदायित्वम्। तानो नाम स्वरान्तरप्रवर्तको रागस्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः। तानस्त्वंशस्वरो मत इत्यभिनवगुप्तः॥ गाता यं यं स्वरं गच्छेत्तं तं वंशेन तानयेदिति भरतः। तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वमुपगन्तुमिच्छतीवेत्युत्प्रेक्षा सा च दरीमुखोत्थेनेत्येकदेशविवर्त्तिरूपकोज्जीविता मुखसाध्यत्वात्तानप्रदायित्वस्य। यत्रावयवरूपणादवयविरूपणं गम्यते तदेकदेशविवर्त्तिरूपकम्। गम्यते चात्र अवयविनः पुंसो रूपणं यच्छब्दनिर्दिष्टे हिमाद्रावितरत् बहुना ८।

कपोलेति। यत्र हिमाद्रौ करिभिर्गजैः कपोलकण्डूर्गण्डस्थलकण्डूर्विनेतुमपनेतुं विघट्टितानां घर्षितानां सालद्रुमाणां सम्बन्धिन्या स्रुतानि करिक-

यत्र स्रुतक्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति ॥९॥
वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्या
मतैलपूराः सुरतप्रदीपाः ॥१०॥

पोलघर्षणात् च्चरितानि क्षीराणि येषां तेषां भाव-स्तत्ता तया हेतुना प्रसूतः उत्पन्नः गन्धः सानूनि सुरभीकरोति ॥ एतेनास्य गजाकरत्वङ्गम्यते। तथा च गजायुर्वेदे हिमवद्विन्ध्यमलया गजानां प्रभवा नगा इति ॥९॥

वनेचराणामिति ॥ यत्र हिमाद्रौ रजन्यां दर्य्यः कन्दरा एव गृहास्तेषामुत्सङ्गेष्वभ्यन्तरेषु निषक्ताः संक्रान्ता भासो यासान्ताः ओषधयस्तृणजज्योतींषि। अम्भास्वोषधिषु च तेजो निधाय रविरस्तं यातीत्या-गमः। वनितानां सखायो वनितासखाः। राजाहःस-खिभ्यष्टच्। तेषां रममाणानामित्यर्थः। वने चरन्तीति वनेचराः किराताः। चरेष्टः इति टप्रत्ययः। तत्पु-रुषे कृति बहुलम् इत्यलुक्। तेषां वनेचराणाम् अतै-लपूराः अनपेक्षिततैलसेकाद्रत्यर्थः। सुरते सुरतकर्म्मणि प्रदीपा भवन्ति। अत्र ओषधीष्वारोप्यमाणस्य प्रदीप-

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्
मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्त्ता
भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥११॥
दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।

त्वस्य प्रकृतसुरतोपयोगित्वात्परिणामालङ्कारः । तदुक्तम् आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति । तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्य्योत्पत्तिलक्षणा विभावना चेत्युभयोः संसृष्टिः ॥ १० ॥

उद्वेजयतीति । यत्र हिमाद्रौ शिलीभूतं घनीभूतं हिमं यत्र तस्मिन् अतएवाङ्गुलीनां पार्ष्णीनाञ्च भागान् प्रदेशान् उद्वेजयत्यतिशैत्यात् क्लेशयत्यपि मार्गे श्रोणयश्च पयोधराश्च श्रोणिपयोधरम् । दुर्व्वहेण दुर्द्धरेण श्रोणिपयोधरेण आर्त्ताः पीड़िताः आङ्पूर्व्वादृच्छतेः क्तः । उपसर्गादृति धाताविति वृद्धिः । अश्वानां मुखानीव मुखानि यासां ता अश्वमुख्यः किन्नरस्त्रियः । उष्ट्रमुखवत् समासः । स्यात् किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुरित्यमरः । मन्दां मन्थरां गतिं न भिन्दन्ति न त्यजन्तीत्यर्थः । पादपीड़ाकरेऽतिभारभङ्गुरशरीरतया न शीघ्रं गन्तुं शक्युत इतिभावः ॥११॥

क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव ॥१२॥
लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्वन्ति बालव्यजनैश्चमर्यः ॥१३॥

दिवाकरादिति। यो हिमाद्रिः दिवा दिवसे भीतं भयाविष्टमिव। उलूकमिवेति च ध्वनिः। गुहासु लीनमन्धकारं ध्वान्तं दिवा दिनं करोतीति दिवाकरस्तस्मात् दिवाकरात्। दिवाविभानिशा-प्रभाभास्करेत्यादिना टप्रत्ययः। भीतार्थानां भयहेतुरित्यपादानत्वात्पञ्चमी। रक्षति त्रायते। ननु क्षुद्रसंरक्षणमनर्हमित्याशङ्क्याह क्षुद्र इति। उच्चैः-शिरसामुन्नतानां शरणं प्रपन्ने शरणागते क्षुद्रे नीचेऽपि सति सज्जन इव नूनं ममत्वं ममायमित्यभिमानः अस्तीति शेषः। मम शब्दात् त्वप्रत्ययः। अर्थान्तरन्यासोऽलङ्कारः॥ १२॥

लाङ्गूलेति। चमर्यो मृगीविशेषाः इतस्ततः लाङ्गूलानि बालधयः। पुच्छोऽस्त्री लोमलाङ्गूले बालहस्तश्च बालधिरित्यमरः। तेषां विक्षेपै र्धूननैः विसर्पिण्यो विसृमराः शोभाः कान्तयो येषां तैः चन्द्र-

यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किम्पुरुषाङ्गनानाम्।
दरीगृहद्वारविलम्बिबिम्बा
स्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥
भागीरथीनिर्झरशीकराणां
वोढ़ा मुहुः कम्पितदेवदारुः।

मरीचिभिरिव गौरैः शुभ्रैः। गौरः करीषे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि चेतियादवः। उपमानानि सामान्यवचनैरिति समासः। वालव्यजनैश्चामरैः यस्य हिमाद्रेः गिरिराजशब्दं गिरिराजइति संज्ञाम् अर्थयुक्तमभिधेयवन्तं कुर्व्वन्ति। राजानो हि छत्रचामरादिचिह्निताइति भावः ॥ १३ ॥

यत्रेति। यत्र हिमाद्रौ अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां किम्पुरुषाङ्गनानां किन्नरस्त्रीणां यदृच्छया दैवगत्या दरीगृहद्वारेषु विलम्बिबिम्बाः लम्बमानमण्डलाः जलदास्तिरस्करिण्यो जवनिका भवन्ति। प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सेत्यमरः। तिरसोऽन्यतरस्यामिति सत्वम्। अत्र जलदेष्वारोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतोपयोगित्वात्परिणामालङ्कारः ॥ १४ ॥

भागीरथीति। भागीरथीनिर्झरशीकराणां गङ्गा-

यद्वायुरन्विष्टमृगैः किरातैः
रासेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥
सप्तर्षिहस्तावचितावशेषा-
ण्यधो विवस्वान् परिवर्त्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि

प्रवाहपाथः कणानाम् । कर्म्मणि षष्ठी । वोढा प्रापकः । वहेस्तृच । मुहुः पुनः पुनः सद्यो वा । पौनःपुनेऽत्र भृशार्थे च सद्यो वा स्यान्मुहुः पदमिति वैजयन्ती । कम्पिताः देवदारवो येन स तथोक्तः । भिन्नानि विश्लेषितानि शिखण्डिनां बर्हाणि गतिलाघवार्थं किरातकटिबद्धानि येन स तथोक्तः । क्रमाद्विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि । यस्य हिमाद्रेर्वायुः अन्विष्टमृगैर्मार्गितमृगैः श्रान्तैरिति भावः । अन्विष्टं मार्गितं मृगितमित्यमरः । किरातैरासेव्यते ॥ १५ ॥

सप्तर्षीति । सप्त च ते ऋषयश्च सप्तर्षयः । दिक्-सङ्ख्ये संज्ञायामिति समासः । तेषां हस्तैरवचिते-भ्योलूनेभ्यः अवशेषाण्यवशिष्टानि । शेषोऽप्रधाने सन्तापे त्रिष्वन्यतोपयुज्यतइति केशवः । कर्म्मणि घञ् प्रत्ययः । अनेन पद्मानां साफल्यं सूचितम् । यस्य हिमाद्रेः । रोहन्तीति रुहाणि । इगुपधज्ञाप्रीकिरः क इति कप्रत्ययः । अग्रे उपरि यानि सरांसि तेषु रुहाणि पद्मानि अधः परिवर्त्तमानो भ्रमन् विवस्वान्

प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च।
प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥

सूर्यः ऊर्द्धमुखैः मयूखैः प्रबोधयति विकासयति न कदाचिदधोमुखैः अतिमार्त्तण्डमण्डलत्वादग्रभूमेरिति भावः। सप्तर्षिमण्डलं ध्रुवादपूर्द्धमिति ज्योतिषिकाः अतस्तेषामग्रसरोरुहभागित्वं युक्तम् ॥ १६ ॥

यज्ञाङ्गेति। यस्य हिमाद्रेर्यज्ञाङ्गानां यज्ञसाधनानां सोमलतादीनां योनिः प्रभवः तस्य भावस्तत्त्वम्। यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरइति विष्णुपुराणात्। धरित्रीधरणक्षमं भूभारधरणयोग्यं सारं बलञ्च। सारो बले स्थिरांशे चेत्यमरः। अवेक्ष्य ज्ञात्वा प्रजापतिः स्वयमेव कल्पितो यज्ञभागो यस्मिन् तत्तथोक्तम्। सोमस्य राज्ञः कुलजः इन्दोः शृङ्गो समुद्रस्य शिशुमारोहिमवतोहस्तीति श्रुतेः इतिभावः। शैलानामाधिपत्यम् अधिपतित्वम्। पत्यन्तपुरोहितादिभ्यो यगिति यक्प्रत्ययः। अन्वतिष्ठत् ददातिस्मेत्यर्थः। उक्तञ्च ब्रह्माण्डपुराणे। शैलानां हिम-

स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः।
मेनां मुनीनामपि माननीया
मात्मानुरूपां विधिनोपयेमे॥ १८॥

कालक्रमेणाथ तयोः प्रवृत्ते

वन्तश्च नदीनाञ्चैव सागरम्। गन्धर्वाणामधिपतिञ्चक्रे चित्ररथं विधिरिति॥ १७॥

संप्रति कथां प्रस्तौति।

स मानसीमिति। मेरोः सखा मेरुसखः बन्धुसम्पन्नदृतिभावः। स्थितिज्ञः मर्यादाभिज्ञः अनेन श्रुतसम्पत्तिः सूच्यते। स हिमवान् पितॄणां मानसीं मनःसङ्कल्पजन्याम्। मुनीनामपि माननीयां योगब्रह्मवादाभ्यां पूज्यामित्यर्थः। उक्तञ्च विष्णुपुराणे। तेभ्यः शुभास्पदं जज्ञे मेनका हरिणी तथा। ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विजेति। आत्मानुरूपां कुलशीलसौन्दर्यादिभिः सदृशीम्। मेनां मेनकादेवीति नामवतीं कन्याम्, कुलस्य स्थितये प्रतिष्ठायै विधिना यथाशास्त्रेणोपयेमे परिणीतवान्। उपाद्यमः स्वकरणे इत्यात्मनेपदम्। तेषान्तु मानसी कन्या मेना नाम महागिरेः। पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते इति ब्रह्माण्डपुराणात्॥ १८॥

कालक्रमेणेति। अथ कालक्रमेण गच्छता काले-

स्वरूपयोगेऽ सुरतप्रसङ्गे ।
मनोरमं यौवनमुद्वहन्त्या
गर्भोऽभवद्भूधरराजपत्न्याः ॥ १८ ॥
असूत सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम् ।

नेत्यर्थः । तयोर्मेनकाहिमवतोः स्वरूपयोगेऽ सौन्दर्यानुगुणे । यद्वा रूप्यते निश्चीयते अनेनेति रूपं ज्ञानं तद्योगेऽ शास्त्रानुसारिणीत्यर्थः । सुरतप्रसङ्गे सुरतकर्मणि प्रवृत्ते सति मनोरमं यौवनमुद्वहन्त्याः भूधरराजपत्न्याः मेनकायाः गर्भोऽभवत् ॥ १८ ॥

असूतेति । सा मेना नागवधूपभोग्यं नागकन्यापरिणेतारमित्यर्थः । अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम् । सख्यमूलं सूचयति । पक्षच्छिदि पक्षच्छेत्तरि । सत्सूद्विषेत्यादिना क्विप् प्रत्ययः । वृत्रशत्रौ क्रुद्धे कुपितेऽपि कुलिशक्षतानां वज्रप्रहाराणाम् । सम्बन्धसामान्ये षष्ठी । जानातीति ज्ञः । इगुपधज्ञेति कप्रत्ययः । वेदनानां ज्ञः अथवा वेदनां जानातीति वेदनाज्ञः । आतोऽनुपसर्गे कः इति क प्रत्ययः । उपपदमतिङ् इति समासः । स न भवतीत्यवेदनाज्ञः तं कुलिशक्षतवेदनानभिज्ञमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्

क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा-
ववेदनाज्ञं कुलिशक्षतानाम्॥ २०॥

अथावमानेन पितुः प्रयुक्ता
दक्षस्य कन्या भवपूर्व्वपत्नी।

समासः। पक्षच्छेदोद्यतशक्रात् त्राणाय शरणागमनमनयोः सख्यमूलमिति भावः। मैनाकं पुत्रमसूत। सर्वपर्वतपक्षच्छेदेऽप्ययमच्छिन्नपक्ष एवेति मैनाकस्योत्कर्षः।तादृक्पुत्रवत्त्वं हिमाद्रेरिति सार्थकं मैनाकस्य वर्णनम्। पिता न ज्ञायते यस्या भ्राता यदि न विद्यते। नोपयच्छेत्तु तां कन्यां धर्म्मलोपभयात्सुधीरिति अभ्रातृकन्यापरिणयनिषेधात् प्रकृते पार्वती भ्रातृमतीत्येति सूचनार्थं मैनाकवर्णनमिति तात्पर्य्यार्थः॥ २०॥

अथेति। अथ मैनाकजननानन्तरं दक्षस्य प्रजापतेः कन्या भवस्य महादेवस्य पूर्व्वपत्नी पूर्वभार्य्या सती पतिव्रता। सती साध्वी पतिव्रतेत्यमरः। सती नाम देवी। पितुर्दक्षस्य। कर्त्तरी षष्ठी। अवमानेन स्वभर्त्तृवज्ञया प्रयुक्ता प्रेरिता योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती। जन्मने पुनरुद्भवाय तां शैलवधूं मेनकां प्रपेदे। अत्र पुरा किल सती देवी दक्षाध्वरे तत्कृतां स्वभर्त्तवज्ञामसहमाना पितरं

सती सती योगविसृष्टदेहा
तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥
सा भूधराणामधिपेन तस्यां
समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षतायां
नीताविवोत्साहगुणेन सम्पत् ॥ २२ ॥
प्रसन्नदिक् पांशुविविक्तवातं

प्रसूत उपेच्य मत्कर्त्तव्यकार्यं लज्जामातैव करिष्य-तीति निर्द्धार्य्य देवकार्य्याणि साधयितुञ्च योगाग्निना स्वशरीरं ददाहेति पुराहत्तकथानुसन्धेया ॥ २१ ॥

सेति। भव्या कल्याणी सा सती भूधराणा-मधिपेन हिमवता समाधिमत्यां नियमवत्यां तस्यां मेनकायां सम्यक्प्रयोगात्साध्वाचरणाद्धेतोः अपरि-क्षतायाम् अभ्रष्टायां नीतौ उत्साहगुणेन उत्साह शक्त्या कर्त्री सम्पदिव उदपादि उत्पादिता। उत्प-द्यतेर्ण्यन्तात् कर्म्मणि लुङ्। चिण् भावकर्म्मणोरिति चिण् प्रत्ययः। चिणो लु_ इति तस्य लुक्॥ २२ ॥

प्रसन्नेति। प्रसन्नाः निर्म्मलाः दिशो यस्मिन् तत् प्रसन्नदिक्। पांशुविविक्ता रजोरहिता वाता यस्मिन् तत् तथोक्तम्। शङ्खस्य स्वनात् स्वनस्य वा अनन्तरं पुष्पवृष्टि र्यस्मिन् तत्तथोक्तं तस्याः पार्व्वत्याः

अङ्कुरस्वनानन्तरपुष्पवृष्टिः ।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥

तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ॥ २४ ॥

दिनेदिने सा परिवर्द्धमाना

जन्मदिनम् । स्थितिशीलाः स्थावराः शैलवृक्षादयः । स्थेशभासपिसकसोवरजिति वरच् प्रत्ययः । जङ्गम्यन्ते भृशं गच्छन्तीति जङ्गमाः देवतीर्यग्मनुष्यादयः । स्थावराश्च जङ्गमाश्च तेषां द्वयानामपि शरीरिणां सुखाय आनन्दाय बभूव ॥ २३ ॥

तयेति । स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री जनयित्री । स्वरतिसूयतिसूतिधूञूदितो वा इतीड़ागमः । विदूरस्याद्रेः प्रान्तभूमिः विदूरभूमिः । अविदूरे विदूरसत्र गिरेस्तुङ्गरोधसः । काकतालीयसोमान्ते मणीनामाकरो भवेतिवृद्धः । नवमेघशब्दादुद्भिन्नया रत्नशलाकया रत्नाङ्कुरेणेव सुतरां चकाशे रराज ॥ २४ ॥

दिनेदिन इति । लब्ध उदयो यया सा लब्धोदया

लब्धोदया चान्द्रमसीव लेखा।
पुपोष लावण्यमयान् विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ॥ २५ ॥
तां पार्व्वतीत्याभिजनेन नाम्ना

उत्पन्ने तदर्थः। अभ्युदितेतदन्यत। दिने दिने प्रति दिनम्। नित्यवीप्सयोरिति वीप्सायां द्विरुक्तिः। परिवर्द्धमाना उभयत्र समानमेतत्। सा बाला चन्द्र-मस इयञ्चान्द्रमसी लेखेव लावण्यमयान् कान्तिविशेष प्रचुरान्। मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत इति भूपालः। विशेषानवयवान् विशेषोऽवयवे व्यक्ताविति रत्न-माला। ज्योत्स्नायाम् अन्तरमन्तर्द्धानं येषां तानि ज्योत्स्नान्तराणि ज्योत्स्नया अन्तर्हितानि तन्मया-नीतियावत्। अन्याः कलाः कलान्तराणीव। सुप्-सुपेति समासः। स्थानात्मीयान्यतादर्थ्यरन्ध्रान्त-र्धिषु चान्तरमिति शाश्वतः पुपोष उपचितवती। इयं वाक्योपमेत्याह दण्डी। तल्लक्षणन्तु वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते। एकानेकेवशब्दत्वात्सा तु वाक्योपमा द्विधा ॥ २५ ॥

तामिति। बन्धुप्रियां तां बालां बन्धुजनः पित्रादिः। अभिजनादागतेनाभिजनेन पित्रादिपूर्व्व-

बन्धुप्रियां बन्धुजनो जुहाव।
उ मेति माता तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम॥ २६॥
महीभृतः पुत्रवतोऽपि दृष्टि

सम्बन्धोपाधिकेनेत्यर्थः। अभिजनाः पूर्व्वबान्धवा इति काशिका। नाम्ना। पर्व्वतस्यापत्यं स्त्री पार्वती। तस्यापत्यमित्यण् प्रत्ययः। इति जुहाव आहूतवान्। ह्वयतेर्लिटि रूपम्। पर्व्वतजन्यत्वोपाधिना पार्वतीति नाम्ना प्रसिद्धिरिति भावः। पश्चादाभिजननामप्रवृत्त्यनन्तरं माता जनन्या उइति सम्बोधने। उइति वितर्कसम्बोधनपादपूरणेष्विति गणव्याख्याने। मा शब्दो निषेधे। उ हे वत्से मा मा कुर्व्वित्येवं रूपेण तपसस्तपश्चर्य्यायाः। वारणार्थानामीप्सितः इत्यपादानत्वात् पञ्चमी। निषिद्धा निवारिता सती सुमुखी सा बाला उमेत्याख्यां नामधेयम् उमाख्यां जगाम॥ २६॥

महीभृत इति। पुत्राश्च दुहितरश्च पुत्राः। भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्येकशेषः। तेऽस्य सन्तीति पुत्रवान्। भूमार्थे मतुप्। तस्य पुत्रवतोऽपि बह्वपत्यस्यापीत्यर्थः। महीभृतो हिमाद्रेर्दृष्टिश्चक्षु तस्मिन्नपत्ये तोके। अपत्यं तोकं तयोः

स्तस्मिन्नपतेत्र न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ २७ ॥
प्रभामहत्या शिखयेव दीप
स्त्रिमार्गयेव त्रिदिवस्य मार्गः ।

समेद्भूतभ्रमरः। तस्यां पार्वत्यामित्यर्थः। तृप्तिं न जगाम। तथाहि अनन्तपुष्पस्य नानाविधकुसुमस्यापि मधोर्वसन्तस्य सम्बन्धिनी द्विरेफमाला भृङ्गपङ्क्तिः चूतस्य विकारे चूते चूतकुसुमे। अवयवे च प्राण्योषधिवृक्षेभ्य इति विकारार्थोत्पन्नस्याण् प्रत्ययस्य लुप्प्रकरणे। पुष्पमूलेषु बहुलम् इति पठनाल्लुक्। सविशेषः सातिशयः सङ्गो यस्याः सा तथोक्ता अत्यन्तासक्तेत्यर्थः ॥ २७ ॥

प्रभेति। प्रभामहत्या प्रकाशाधिकया शिखया ज्वालया दीप इव। शिखादीपयोरवयवावयविभावाद्भेदेन व्यपदेशः। त्रयोमार्गा यस्यास्तया त्रिमार्गया मन्दाकिन्या तृतीया द्यौर्लोक इति त्रिदिवः स्वर्गः। वृत्तिविषये त्रि शब्दस्य त्रिभागवत् पूरणार्थत्वम्। पृषोदरादित्वाद्दिव् शब्दादकारागमः पुंस्त्वं लोकात्। दीव्यतेर्घञर्थे कविधानम्, दीव्यन्त्यत्र जना इति दिव इति चीरस्वामी। तस्य मार्ग इव। संस्कारो

संस्कारवत्येव गिरा मनीषी
तथा स पूतश्च विभूषितश्च ॥ २८ ॥
मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्रकैश्च ।

व्याकरणजन्या शुद्धिः तद्वत्या गिरा वाचा । भद्रैषां लक्ष्मीर्निहिताधिवाचीति श्रुतेरिति भावः । मनस ईषा मनीषा सास्यास्तीति मनीषी विद्वानिव । पृषोदरादित्वात् साधुः । तथा पार्वत्या स हिमवान् पूतः शोधितश्च विभूषितश्च । अत्र शिखागिरोरवि-शिष्टयोरुपमानानर्हत्वान्न विशेषणाधिक्यदोषः । इयं मालोपमा ॥ २८ ॥

मन्दाकिनीति । सा पार्वती बाल्ये वयसि क्रीड़ानां रसः स्वादः रुचिरिति यावत् तं क्रीड़ारसम् । रसो गन्धे रस स्वाद इति विश्वः निर्विशतीव भुञ्जानेव । निर्वेशो भृतिभोगयोरितिविश्वः आच्छीनद्योर्नुमिति विकल्पान्नुन् भावः । सखीनां मध्यगता सती मन्दा-किन्याः सैकतेषु पुलिनेषु वेदिकाभिः कन्दुकैः । क्रियया निर्वृत्तैः कृत्रिमैः । डवितः क्त्रिः इति क्त्रिप्रत्ययः क्त्रेर्मम्नित्यम् इति मवागमश्च । पुत्रकैः पाञ्चालिकाभिः पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृतेत्य-मरः । संज्ञायां कनितिकन् प्रत्ययः ; मुहुः पुनः पुनः रेमे ॥ २९ ॥

रेमे मुहुर्मध्यगता सखीनां
क्रीडारसं निर्विशतीव बाल्ये ॥ २९ ॥

तां हंसमालाः शरदीव गङ्गां
महौषधिं नक्तमिवात्मभासः।
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ॥३०॥

असम्भृतं मण्डनमङ्गयष्टे
रनासवाख्यं करणं मदस्य।

तामिति। स्थिरः स्थेयानुपदेशः प्राग्भवीयो यस्यास्ताहृशीं मेधाविनीमित्यर्थः। तां पार्वतीमुपदेशकाले प्राक्तनजन्मविद्याः पूर्व्वजन्माभ्यस्तविद्या इत्यर्थः। शरदि गङ्गां हंसमाला इव नक्तं रात्रौ महौषधिं तृणविशेषम् आत्मभासः स्वदीप्तय इव प्रपेदिरे। उपमानसामर्थ्यादुपदेशमन्तरेणैवेति गम्यते ॥३०॥

असम्भृतमिति। अथ सा पार्वती अङ्गयष्टेरसम्भृतमयत्नसिद्धं मण्डनं प्रसाधनम् अनासवाख्यम्। आसवाख्यारहितं मदस्य करणं साधनं कामस्य पुष्पाद्यतिरिक्तमस्त्रम् आत्मभृतं बाल्याच्छैशवात्परम् अनन्तरभावि वयो यौवनं प्रपेदे प्राप। यौवनेनैव हि युवतयः प्रसाध्यन्ते काम्यन्ते चेति भावः।

कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात्परं साथ वयः प्रपेदे ॥३१॥

उन्मीलितं तूलिकयेव चित्रं
सूर्यांशुभिर्भिन्नमिवारविन्दम्।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नवयौवनेन ॥३२॥

अत्र द्वितीयपादे आसवरूपकारणाभावेऽपि तत्कार्यत्रमदोक्तेर्विभावनालङ्कारः। तदुक्तं कारणाभावे कार्योत्पत्तिर्विभावनेति। प्रथम तृतीययोस्तु आरोप्यमाणयोर्मण्डनमदास्त्रतयोः प्रकृतोपयोगात् परिणामालङ्कारः। तल्लक्षणन्तु (११ श्लोकव्याख्याने) उक्तम् ॥३१॥

उन्मीलितमिति। नवयौवनेन प्रथमयौवनेन विभक्तमभिव्यञ्जितं पीनजघनादिसंस्थानमित्यर्थः। तस्याः पार्वत्याः वपुः तूलिकया कूर्च्चिकया शलाकयेत्यर्थः। तूलिका कथिता लेखकूर्च्चिका तूलशय्ययोरिति विश्वः। उन्मीलितं रञ्जनद्रव्येणोद्भासितं समुत्कीर्णरूपमिति यावत् चित्रमालेख्यमिव। सूर्यांशुभिर्भिन्नं विकसितम् अरविन्दं पद्ममिव। चतस्रः अस्रयो यस्य तच्चतुरस्रमन्यूनातिरिक्तं यथा तथा शोभत इति चतुरस्रशोभि। ताच्छील्ये णिनिः।

अभ्युन्नताङ्गुष्ठनखप्रभाभि
र्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां
स्थलारविन्दश्रियमव्यवस्थाम् ॥३३॥

बभूव । चित्रारविन्दयोस्तूलिकातरणिकिरणसम्बन्ध-
इव स्वतः सिद्धस्यैवाङ्गसौष्ठवस्य यौवनप्रादुर्भावोऽभि-
व्यञ्जको बभूवेत्यर्थः ॥३२॥

देवतानां रूपं पादाङ्गुष्ठप्रभृति वर्ण्यते मानु-
षाणां केशादारभ्येति धार्मिकाः । संप्रति सप्तदश-
भिः श्लोकैः पार्वत्या पादादिकेशान्तवर्णनमारभते ।

अभ्युन्नतेति । अभ्युन्नतयोरङ्गुष्ठनखयोः प्रभाभि-
र्निमित्तेन निक्षेपणान्निर्भरन्यासाद्धेतोः रागमन्तर्गतं
लौहित्यम् । रागः क्लेशादिके रक्ते मात्सर्ये लो-
हितादिष्विति शाश्वतः । उद्गिरन्तौ वमन्तौ बहिर्निः
सारयन्ताविव स्थिताविन्यर्थः । अत्रोद्गिरतेर्गौणार्थ-
त्वान्न ग्राम्यतादोषः प्रत्युतो गुणएव । यथाह दण्डी ॥
निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अति-
सुन्दरमन्यत्र ग्राम्यकक्षां विगाहत इति । तस्याश्चरणौ
तच्चरणौ । पृथिव्यामव्यवस्थाम् व्यवस्थारहितां सञ्चारि
णीमित्यर्थः । स्थलारविन्दश्रियमाजह्रतुः । स्थल-
विशेषणान्नियतलौहित्यलाभः । अत्र सामुद्रिकाः ॥

सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धै
रादित्सुभिर्नूपुरसिञ्जितानि ॥ ३४ ॥

यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ । निगूढ़गुल्फौ निहतौ सा स्यान्नृपतिसम्मतेति । अत्रोपमानधर्मस्यारविन्दश्रियश्चरणयोरुपमेययोरसम्भवादरविन्दश्रियमिव श्रियमिति प्रतिविम्बीकरणाद्वेपान्निदर्शनालङ्कारः । सा च सम्बन्धेऽसम्बन्धलक्षणातिशयोक्त्यनुप्राणिता अव्यवस्थामित्यनेन स्थाऽरविन्दस्य स्थैर्यसम्बन्धेऽपि असम्बन्धाभिधानात् । निदर्शनालक्षणन्तु । अस स्ववद्धर्मयोगादुपमानोपमेययोः । प्रतिविम्बक्रिया गम्या यत्र सा स्यान्निदर्शनेति ॥ ३३ ॥

सेति । प्रत्युपदेशलुब्धैः गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थी नोपपद्यत इति न्यायाद्विभावः । तदेव व्यनक्ति । नूपुरसिञ्जितान्यादित्सुभिराददातुमिच्छुभिः रञ्जीरविदितमञ्जुकूजितापदेशमिच्छद्भिरित्यर्थः ॥ राजहंसैः सन्नताङ्गी कुचभारादितिभावः । सा पार्व्वती लीलाभिर्विलासैः अञ्चिताः पूजिताः विक्रमाः पादन्यासा येषु तेषु । अञ्चेः पूजायाम् इतीडागमः । लीला

वृत्तानुपूर्वे च न चातिदीर्घे
जङ्घे शुभे सृष्टवतस्तदीये ।
शेषाङ्गनिर्माणविधौ विधातु
र्लावण्य उत्पाद्य इवास यत्नः ॥३५॥

विलासक्रिययोरित्यमरः । गतेषु विषयेषु व्यनीयतेव विनीता किमु । अन्यथा कथमस्या हंसगमनमितुत्प्रेक्षा ॥ ३ ॥

वृत्तेति । वृत्ते वर्तुले पूर्वमनुगते अनुपूर्वे गोपुच्छाकारे इत्यर्थः । वृत्ते च ते अनुपूर्वे च वृत्तानुपूर्वे नातिदीर्घे च । महाविभाषया न समासः । नञो विशेषणत्वं चशब्दप्रयोगादेव ज्ञेयम् । शुभे मङ्गले तस्या इमे तदीये जङ्घे प्रसृते । जङ्घा तु प्रसृतेत्यमरः ॥ सृष्टवतो निर्म्मितवतो विधातुः स्रष्टुः शेषाङ्गनिर्म्माणविधौजङ्घाव्यतिरिक्तावयवनिर्म्माणार्थमित्यर्थः । उत्पाद्ये पुनः सम्पाद्ये लावण्ये कान्तिविशेषे विषये ॥ लावण्यलक्षणन्तु ( २५ श्लोकव्याख्याने ) उक्तम् । यत्नः आसेव बभूवेवेतुत्प्रेक्षा ॥ उपादानमन्तरेण कार्य्यस्य दुष्करत्वात्तदङ्गानाञ्च लावण्योपादानकत्वात् पूर्वसम्पादितस्य च जङ्घार्थमेव कार्त्स्न्येन विनियोगात् पुनर्लावण्यसम्पादने यत्नः स्यादेवेतेत्यतादृक्सौन्दर्य्यं तज्जङ्घे इति भावः । आसेति बभूवार्थे तिङन्तप्रति-

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात्कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः ॥३६॥
एतावता नन्वनुमेयशोभि
काञ्चीगुणस्थानमनिन्दितायाः।

रूपकमव्ययमित्याह शाकटायनः। वल्लभस्तु न तिङन्तप्रतिरूपकमव्ययम् अस्ति भूरिति श्रादेशनियमात्तादृक्तिङन्तस्यैवाभावात्। किन्तु कवीनामयं प्रामादिकः प्रयोग इत्याह। वामनस्तु असगतिदीप्त्यादानेष्विति धातोर्लिटि रूपमिदमित्याह। आसेत्यनुदात्तेत् दीप्त्यर्थे आस दिदीपे प्रवृत्त इत्यर्थः ॥३५॥

नागेन्द्रेति। नागेन्द्राणामैरावतादीनां हस्ताः कराः त्वचि चर्म्मणि कर्कशत्वात् कदलीविशेषा रम्भादयः एकान्तशैत्यान्नियतशैत्याद्धेतोः लोके परिणाहि वैपुल्ययुक्तम्। परिणाहो विशालतेत्यमरः। रूपं लब्ध्वापि अपिशब्दात्करिकदलीमात्रस्य तादृक् परिणाहो नास्तीति भावः। तस्या ऊर्वोः ऊर्वोरुपमानबाह्या जाताः उपमानक्रियानर्हा बभूवुः। तदूर्वोर्न कार्कश्यं नाप्येकान्तशैत्यमिति भावः ॥३६॥

एतावतेति। अनिन्दितायाः अनवद्यायाः पा-

आरोपितं यद्गिरिशेन पश्चा
दनन्यनारीकमनीयमङ्कम् ॥३७॥

र्व्त्याः काञ्चीगुणस्थानं नितम्बबिम्बम् एतावता ननु एतावतैव। प्रश्नावधारणानुज्ञाविनयामन्त्रणे नन्वित्यमरः। शोभत इति शोभि। आवश्यके णिनिः ततस्त्वप्रत्ययः। अनुमेयं शोभित्वं शोभा यस्य तदनुमेय शोभि। त्वप्रत्ययस्तु गतार्थत्वान्न प्रयुक्त इत्याह वामनः पश्चात् आदौ नैःस्पृह्येऽपि पश्चात्तपश्चर्यानन्तरमित्यर्थः। गिरौ शेत इति गिरिशः शिवः। गिरौ डच्छन्दसीति डप्रत्ययः। भाषायामपि क्वचिदिष्यते। अथवा गिरिः कैलासोऽस्यास्ति गिरिशः। लोमादित्वात् शप्रत्ययः॥ तेन गिरिशेन। अन्यासां नारीणां कमनीयः कामयितुं शक्यो न भवतीत्यन्यनारीकमनीयः तम् अङ्कं निजोत्सङ्गमारोपितमधिरोपितमिति यत् एतावता लिङ्गेनेति पूर्वेणान्वयः। रोहते र्ण्यन्तात् कर्म्मणि क्तः। रुहः पोऽन्यतरस्यामिति हकारस्य पकारः। गत्यर्थविवक्षायां द्विकर्म्मकत्वम्। प्रधाने कर्म्मणि क्तः। गिरिजानितम्बबिम्बं विश्वातिशायिसौन्दर्य्यं गिरिशाङ्कारूढत्वात् व्यतिरेकेण नार्य्यन्तरनितम्बबिम्बवत्। विपक्षे हेत्वनुक्तिरेव बाधिका। दाक्षायणीनितम्बबिम्बस्य तु पक्षसपक्षयोरन्यतरभा-

तस्याः प्रविष्टा नतनाभिरन्ध्रं
रराज तन्वी नवलोमराजिः।
नीवीमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्च्चिः ॥३८॥
मध्येन सा वेदिविलग्नमध्या
बलित्रयं चारु बभार बाला।
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ॥३९॥

वानतिवृत्ते निष्कलङ्कमनुमानमितयलमस्थानसंर-म्भेण ॥ ३७ ॥

तस्यादिति। नीवीं वस्त्रग्रन्थिम्। स्त्रीकटीवस्त्र बन्धेऽपि नीवी परिपणेऽपि चेत्यमरः। अतिक्रम्य अतीत्य नतं निम्नं नाभिरन्ध्रं प्रविष्टा प्रविशन्ती तन्वी सूक्ष्मा तस्याः पार्वत्या नवरोमराजिः। सितेतरस्य असितस्य इन्द्रनीलस्येत्यर्थः। तस्याः पार्वत्याः मेखला तन्मेखला। तस्या इत्यनुवृत्तौ पुनस्तच्छब्दो-पादानं वाक्यान्तरत्वात् सोढव्यम् यद्वा तस्याः नीव्या मेखला तन्मेखला तत्र तदवस्थानात्। तस्याः मध्य-मणेरर्च्चिः प्रभेव रराज। ज्वालाभासो नपुंसयर्च्चि रि-त्यमरः॥ ३८ ॥

अन्योन्यमुत्पीड़यदुत्पलाच्याः
स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ॥ ४० ॥

मध्येनेति । वेदिः परिष्कृता भूमिरित्यमरः । वेदि-विलग्नमध्या वेदिवत्कृशमध्या तनुमध्येति यावत् । सा बाला पार्वती मध्येन मध्यभागेन चारु सुन्दरं वलित्रयं कामस्यारोहणार्थं नवयौवनेन प्रयुक्तं र-चितं सोपानमिव बभावेत्युत्प्रेचा ॥ ३९ ॥

अन्योन्यमिति । अन्योन्यं परस्परम् । कर्म्मव्य-तिहारे सर्वनाम्नो द्वे वाच्ये इति द्विरुक्तिः । समा-सवच्च बहुलमिति बहुलवचनादसमासपचेऽपि पूर्व-पदस्यस्य सुपः सुर्वक्तव्य इति तत्रत्यवार्तिकम् । उत्-पीड़यत् उपरुन्धत् पाण्डु गौरम् । उत्पलाच्याः स्तन-द्वयं तथा तेन प्रकारेण प्रवृद्धम् । कर्त्तरि क्तः । श्याम-मुखस्य कृष्णचूचुकस्येति स्वरूपवर्णनं तस्य स्तनद्वय-स्य मध्ये यथा येन प्रकारेण मृणालसूत्रान्तरं विसतन्तु मात्रावकाशोऽपि अलभ्यं लब्धुमशक्यम् । अन्तरमव-काशावधिपरिधानान्तर्धिभेदतादर्थ्ये इत्यमरः । अत्र सम्बन्धे असम्बन्धरूपातिशयोक्त्यलङ्कारः कुचयोः

शिरीषपुष्पाधिकसौकुमार्य्यौ
बाहू तदीयाविति मे वितर्कः ।
पराजितेनापि कृतौ हरस्य
यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥
कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य ।

पीवरत्वातिशयार्थम् अत्रकाशसम्बन्धेप्यसम्बन्धाभिधानादिति ॥ ४० ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थिते सत्याह शिरीषेति । तस्या इमौ तदीयौ बाहू शिरीषपुष्पादधिकं सौकुमार्य्यं मार्द्दवं ययोस्तथोक्ताविति मे वितर्कः ऊहः कुतः यौ बाहू पराजितेनापि पूर्वं निर्जितेनापि मकरध्वजेन कामेन हरस्य कण्ठपाशौ कण्ठबन्धनरज्जू कृतौ कण्ठालिङ्गनं प्रापिताविन्यर्थः । तदसाध्यसाधनात्तत आधिक्यमिति भावः । अत्र बाह्वोरारोपितकण्ठपाशत्वस्य प्रकृतवैरनियर्तानोपयोगात्परिणामालङ्कारः ॥४१॥

कण्ठस्येति । स्तनाभ्यां बन्धुरस्योन्नतस्य तस्याः पार्वत्याः कण्ठस्य गलस्य निस्तलस्य वर्त्तुलस्य मुक्ताकलापस्य मुक्ताभूषणस्य च । वर्त्तुलं निस्तलं वृत्तं बन्धुरन्तून्नतानतम् । कलापो भूषणे बर्हे तूणीरे संहतावपो-

अन्योन्यशोभाजननाद् बभूव
साधारणो भूषणभूष्यभावः ॥ ४२ ॥
चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम्

ति चामरः। अन्योन्यशोभाजननाद्भूषणभूष्यभाव अलङ्कारालङ्कार्यभावः साधारणः समानो बभूव । उभावप्यन्योन्यस्य भूष्यौ भूषणौ च बभूवतुरित्यर्थः। अत्र कण्ठमुक्ताकलापयोः शोभाक्रियाद्वारेणान्योन्यभूषाजनकत्वादन्योन्यालङ्कारः । तदुक्तम् । परस्परं क्रियाजननमन्योन्यमिति ॥ ४२ ॥

इदानीं पार्वतीवदनं चन्द्रकमलसदृशमित्यत्तदेव वचोभङ्ग्याह ।

चन्द्रमिति । लोला चपला परिभ्रमणशीलेत्यर्थः। लक्ष्मीः कान्त्यभिमानिनी देवता चन्द्रं गता प्राप्ता सती पद्मगुणान् सौगन्ध्यादीन् न भुङ्क्ते नानुभवति । पद्माश्रिता सती चान्द्रमस इमां चान्द्रमसीम् अभिख्यां शोभाम्। अभिख्या नामशोभयोरित्यमरः। अस्तवदानन्दिनीं न भुङ्क्ते । उमामुखं प्रतिपद्य तु द्वे चन्द्रपद्मे संश्रयः कारणं यस्यास्तां द्विसंश्रयां प्रीतिमानन्दम् अवाप ततोभयगुणसम्भवादिति भावः। अत्रोपमानभूतचन्द्रपद्मापेक्षया

उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३ ॥
पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम्
ततोऽनुकुर्याद् विशदस्य तस्या
स्ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य ॥ ४४ ॥

उपमेयस्योमामुखस्य अधिकगुणवत्त्वोक्त्या व्यतिरेकालङ्कारः । तदुक्तम् भेदप्राधान्येनोपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेक इति ॥४२ ॥

पुष्पमिति । पुष्पं पुण्डरीकादिकं प्रवाले बालपल्लवे उपहितं निहितं स्याद्यदि । प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवइति विश्वः । मुक्ताफलं वा स्फुटे निर्म्मले विद्रुमे तिष्ठतीति स्फुटविद्रुमस्थं स्याद्यदि ततस्तर्हि विशदस्य शुभ्रस्य ताम्रे अरुणे ओष्ठे पर्य्यस्ता प्रसृता रुक् कान्तिर्यस्य तथोक्तस्य तस्याः पार्वत्याः स्मितस्यानुकुर्य्यात् स्मितमनुकुर्य्यादित्यर्थः अत्र माषाणामश्नीयादितिवत् सम्बन्धमात्रविवक्षया षष्ठी । अत्र पुष्पप्रवालयोर्मुक्ताविद्रुमयोश्च असम्बन्धेऽपि सम्बन्धोक्त्या अतिशयोक्तिः । सा च सम्भावनेत्यलङ्कारसर्वस्वकारः । विशेषतस्तु पुष्पमुक्ताफलयोरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात् प्रती-

स्वरेण तस्याममृतस्रुतेव
प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा
श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥
प्रवातनीलोत्पलनिर्विशेष-
मधीरविप्रेक्षितमायताक्ष्या ।

पालङ्कारः तदुक्तम् उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीप इति लक्षणात् । स च पूर्वोक्तातिशयोक्त्यनुप्राणित इति ॥ ४३ ॥

स्वरेणेति । अभिजातवाचि मधुरभाषिण्यां तस्यां पार्वत्याम् अमृतस्राविणेव क्षिप् । स्वरेण नादेन प्रजल्पितायामालपन्त्याम् । कर्त्तरि क्तः । अन्यैः काकादिभिः पुष्टा अन्यपुष्टा कोकिलाऽपि । मुख्यया वृत्त्या जातिवचनत्वाभावात् क्लीबभावः । ताड्यमाना वाद्यमाना विषमबद्धा तन्त्रीर्वितन्त्रीरिव । अवित्-स्तृतन्त्रिभ्य ईरिति तन्त्रिधातोरौणादिक ईप्रत्ययः । क्लीबभावाच्च हल्ङ्याब्भ्य इति सुलोपः । तदुक्तम् अविलक्ष्मीतरीतन्त्रीह्रीधीश्रीणामुणादितः । स्त्रीलिङ्गानामभीषान्तु न सुलोपः कदाचन इति । एते क्लीवन्ता न भवन्तीत्यर्थः । श्रोतुर्जनस्य प्रतिकूलशब्दा कर्णकठोरनादा भवतीति शेषः ॥ ४५ ॥

तया गृहीतं नु मृगाङ्गनाभ्य-
स्ततो गृहीतं नु मृगाङ्गनाभिः ॥ ४६॥
तस्याः शलाकाञ्जननिर्मितेव
कान्तिर्भ्रुवोरायतलेखयोर्या ।
तां वीक्ष्य लीलां चतुरामनङ्गः
स्वचापसौन्दर्यमदं मुमोच ॥ ४७

प्रवातेति । प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं ततो निर्विशेषं निर्भेदं । तत्सदृशमित्यर्थः । अधीरविप्रेक्षितं चकितविलोकितम् आयताक्ष्या विशालनेत्रया पार्वत्याः । मृगाङ्गनाभ्योहरिणीभ्यो गृहीतमभ्यस्तं नु अथवा मृगाङ्गनाभिः ततस्तस्याः पार्वत्याः पश्चाद्भ्यासमिल् । गृहीतं नु । अत विवक्षितसत्र परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित् । तदुपजीविसन्देहालङ्कार इत्यन्ये उभयोः शङ्कर इत्यपरे ॥ ४६ ॥

तस्यादिति । आयतलेखयोर्दीर्घरेखयोः तस्याः पार्वत्याः भ्रुवोः सम्बन्धिनी शलाकया अञ्जनेन निर्मितेव स्थिता या कान्तिः लीलाचतुरां विलाससुभगां तां कान्तिं वीक्ष्य अनङ्गः स्वचापसौन्दर्यणयो मदस्तं मुमोचेति सौन्दर्यातिशयोक्तिः ॥४७॥

लज्जा तिरश्चां यदि चेतसि स्या-
दसंशयं पर्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्यु-
र्वालप्रियत्वं शिथिलं चमर्यः ॥४८॥
सर्वोपमाद्रव्यसमुच्चयेन
यथाप्रदेशं विनिवेशितेन ।

लज्जेति । तिरश्चां तिर्यग्जातीनां चेतसि लज्जा स्याद्यदि । संशयाभावः असंशयं सन्देहो नास्तीत्यर्थः । पर्वतराजपुत्र्याः । शार्ङ्गरवाद्यञोङीन् इति ङीन् तं प्रसिद्धं केशपाशं केशकलापम् । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे इत्यमरः । प्रसमीक्ष्य दृष्ट्वा चमर्यः मृगीविशेषाः बालाः प्रिया यासामिति विग्रहे बालप्रियास्तासां भावः बालप्रियत्वं प्रिय बालत्वमित्यर्थः । आहिताग्न्यादिपाठात् वा परनिपातः । त्वतलोर्गुणवचनस्येति पुंवद्भावः । शिथिलं कुर्युः । निर्लज्जत्वान्न शिथिलयन्तीत्यर्थः । अतएवात्र निर्लज्जत्वकरणहेतोराद्यपादे वाक्यार्थत्वेनोक्त्या काव्यलिङ्गाख्यालङ्कारः । तदुक्तम् । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति ॥ ४८ ॥

सर्वेति । किम्बहुना सा पार्वती विश्वसृजा विधात्रा एकत्र तिष्ठतीत्येकस्थं तस्य सौन्दर्यस्य सर्व-

सा निर्मिता विश्वसृजा प्रयत्ना-
दैकस्थसौन्दर्य्यदिदृक्षयेव ॥ ४९ ॥

तां नारदः कामचरः कदाचित्
कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं
प्रेम्णा शरीरार्द्धहरां हरस्य ॥ ५० ॥

वस्तु गतस्येत्यर्थः दिदृक्षयेव प्रयत्नात् यथाप्रदेशं क्रमात् विनिवेशितेन स्थापितेन सर्वेषामुपमाद्रव्याणां चन्द्रारविन्दाद्युपमावस्तूनां समुच्चयेन समाहारेण निर्म्मिता दिदृक्षयेवेति फलोत्प्रेक्षा दर्शनार्थित्वाद्विश्वसृज इति ॥ ४९ ॥

तामिति । कामेनेच्छया चरतीति कामचरो नारदः कदाचित्पितुर्हिमवतः समीपे कन्यां तां पार्वतीं प्रेक्ष्य किल, प्रेम्णा नत्वन्यथा हरस्य शिवस्य अर्द्धं हरतीत्यर्द्धहरा । हरतेरनुद्यमनेऽच् इत्यच् प्रत्ययः । शरीरस्यार्द्धहरां शरीरार्द्धहराम् । कुलमधुरम्बरादिवदवयवद्वारा समुदायविशेषकत्वात् समासः अन्यथा त्वर्द्धस्य समप्रविभागवचनत्वादर्द्धशरीरेति स्यात् । एकवधूमसपत्नीकाम्भावियाम् । पूर्वकालेत्यादिना समासः । भवित्रीं भाविनीं

गुरुः प्रगल्भेऽपि वयस्यतोऽस्या-
स्तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूत-
मर्हन्ति तेजांस्यपराणि हव्यम् ॥५१॥
अयाचितारं न हि देवदेव-
मद्रिः सुतां ग्राहयितुं शशाक ।

समादिदेश । हरस्त्राङ्गहारिण्येकपत्नी भविष्यती-
त्यादिष्टवानित्यर्थः ॥५० ॥

गुरुरिति । गुरुः पिता गुरू गीष्पतिपित्राद्याविव्य-
मरः । अतो नारदवचनाद्धेतोः अस्याः पार्वत्याः प्र-
गल्भे वयस्यपि यौवने सत्यपि निवृत्तोऽन्यस्मिन्वरे
जामातर्यभिलाषो यस्य स तथोक्तः सन् ॥ वरो ना
रूपजामात्रोरिति वैजयन्ती । तस्थौ वरान्तरं नान्वि-
ष्टवानित्यर्थः । ननु कुतोऽसौ निर्बन्ध इत्यत आह ऋत
इति । तथाहि मन्त्रैः पूतं संस्कृतं हूयत इति हव्य
माज्यादिकं कृशानोः पावकादृते कृशानुं विना । अन्या
रादितरेत्यादिना पञ्चमी ॥ अपराणि तेजांसि सुव-
र्णादीनि नार्हन्ति न भजन्तीत्यर्थः । ईश्वरादन्यस्य
तद्योग्यस्याभावादुपेक्षेति भावः ॥५१॥

तर्हि तमेवाहूय दीयतामित्याशङ्क्याह

अयाचितारमिति । अद्रिर्हिमवान् अयाचिता-

अभ्यर्थनाभङ्गभयेन साधु-
र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५२ ॥
यदैव पूर्वे जनने शरीरं
सा दक्षरोषात् सुदती ससर्ज्ज ।
तदा प्रभृत्येव विमुक्तसङ्गः
पतिः पशूनामपरिग्रहोऽभूत् ॥५३॥

रम् अयाचमानं देवदेवं महादेवं सुतां पार्वतीं ग्राह-
यितुं स्वयमाहूय परिग्राहयितुं न शशाक नोत्सेहे
तथाहि । साधुः सज्जनः । साधु र्वार्द्धुषिके चारौ
सज्जने चाभिधेयवदिति विश्वः । अभ्यर्थनाभङ्गभयेन
याच्ञावैफल्यभीत्या इष्टेऽप्यर्थे विषये माध्यस्थ्यमौदा-
सीन्यमवलम्बते ॥५२॥

न च तथैव स्थितः किन्तु उपायान्तरं चिन्तित-
वानिति वक्तुं प्रस्तौति यदेति । शोभनाः दन्ता यस्याः
सा सुदती । वयसि दन्तस्य दतृ इति दत्रादेशः ।
उगितश्च इतिङीप् । सा पार्वती पूर्वे जनने पूर्वस्मिन्
जन्मनि । पूर्वादिभ्यो नवभ्यो वेति स्मिन्नादेशविकल्पः
पूर्वं ज्वलनइति पाठे पूर्वं दाक्षायणीत्वे ज्वलने योगा-
ग्नौ । यदा काले दक्षरोषाच्छरीरं ससर्ज्ज तत्याज ।
तदाप्रभृत्येव तदाद्येव यथा तथा पशूनां पतिः शिवः
विमुक्तसङ्गस्त्यक्तविषयासङ्गः सन् अपरिग्रहः अपत्नीक

स कृत्तिवासास्तपसे यतात्मा
गङ्गाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि
किञ्चित् क्वणत्किन्नरमध्युवास ॥५४॥
गणा नमेरुप्रसवावतंसा
भूर्जत्वचः स्पर्शवतीर्दधानाः ।

कोऽभूत् स्वप्रन्तरं न परिजग्राहेत्यर्थः । पत्नीपरिजनादानमूलशापाः परिग्रहा इत्यमरः ॥५३॥

स इति । कृत्तिवासाश्चर्माम्बरः । अजिनं चर्म कृत्तिः स्त्रीत्यमरः । यतात्मा नियतचित्तः स पशुपतिः तपसे तपोऽर्थं गङ्गाप्रवाहेणोक्षिताः सिक्ताः देवदारवो यस्मिन् तत्तथोक्तम् । मृगनाभिगन्धि कस्तूरीगन्धवत् कस्तूरीमृगसञ्चारादिति भावः । मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकमित्यमरः । क्वणन्तो गायन्तः किन्नरा यस्मिन् तत्तथोक्तम् । किञ्चित् किमपि हिमाद्रेः प्रस्थं सानुम् अध्युवास कुत्रचित् प्रस्थे उवासेत्यर्थः । उपान्वध्याङ्वस आधारस्य कर्मत्वम् । प्रस्थोऽस्त्री सानुनानयोरित्यमरः ॥५४॥

गणा इति । गणाः प्रमथगणाः । गणः प्रमथसंख्यौघे इति वैजयन्ती । नमेरुप्रसवावतंसाः सुरपुन्नागकुसुमशेखराः । नमेरुः सुरपुन्नाग इति विश्वः ।

मनःशिलाविच्छुरिता निषेदुः
शैलेयनद्धेषु शिलातलेषु ॥५५॥
तुषारसङ्घातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान् ।
दृष्टः कथञ्चिद्गवयैर्विविग्नै-
रसोढसिंहध्वनिरुन्ननाद ॥५६॥

स्पर्शवतीः सुखस्पर्शा इहोरित्यर्थः । प्रशंसायां मतुप् । भूर्जत्वचो भूर्जवल्कलानि दधानाः वसाना इत्यर्थः । मनः शिलाभिर्धातुविशेषैर्विच्छुरिताः अनुलिप्ताश्च सन्तः शिलायां भवं शैलेयं गन्धौषधिविशेषः । शिलाया ढ्कोश्यो ढक् । तेन नद्धेषु व्याप्तेषु शिलातलेषु निषेदु-रुपविविशुरित्यर्थः ॥५५॥

तुषारेति । तुषारसङ्घाताः हिमघनाः त एव शिलाः ताः खुराग्रैः समुल्लिखन् विदारयन् दर्पेण कलो मधुरध्वनिर्यस्य स दर्पकलः विविग्नैर्भीतैर्गवयै-र्गोसदृशमृगविशेषैः कथञ्चित् कृच्छ्रेण दृष्टः ककुदस्यास्तीति ककुद्मान् वृषभः असोढः सिंहानां ध्वनिर्येन सः सिंहध्वनिमसहमानः सन् उन्ननाद उच्चैर्ननाद जगर्जेत्यर्थः । स्वभावोक्तिरलङ्कारः । तदुक्तम् । स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनमिति ॥५६॥

तत्राग्निमाधाय समित्समिद्धं
स्वमेव मूर्त्यन्तरमष्टमूर्त्तिः ।
स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार ॥५७॥

अनर्घ्यमर्घ्येण तमद्रिनाथः
स्वर्गौकसामर्च्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां
समादिदेश प्रयतां तनूजाम् ॥५८॥

तत्रेति । तपसः फलानामिन्द्रत्वादीनां स्वयं विधाता जनयिता दातेत्यर्थः । अष्टौ मूर्त्तयो यस्य सोऽष्टमूर्त्तिः ईश्वरः । भूतार्कचन्द्रयज्वानो मूर्त्तयोऽष्टौ प्रकीर्त्तिता इति ॥ तत्र प्रस्थे स्वं स्वकीयमेव मूर्त्यन्तरं मूर्त्तिभेदम् समिद्भिः समिद्धं दीपितम् अग्निमाधाय प्रतिष्ठाप्य केनापि कामेन कयापि फलकामनया तपश्चचार चक्रे । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायात् कामेनेत्युक्तम् । तस्यावाप्तसमस्तकामत्वात् केनापीत्युक्तम् ॥५७॥

अनर्घ्यमिति । अद्रीणां नाथोऽद्रिनाथः हिमवान् अर्घं मूल्यमर्हतीत्यर्घ्यः । मूल्ये पूजाविधावर्घ इत्यमरः । दण्डादिभ्यो यः इति यप्रत्ययः । अवर्घ्यो

प्रत्यर्थिभूतामपि तां समाधेः
शुश्रूषमाणां गिरिशोऽनुमेने।
विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि तएव धीराः॥५९॥

न भवतीत्यनर्घ्यः तमनर्घ्यममूल्यमित्यर्थः। स्वर्गः ओकः स्थानं येषां तेषां स्वर्गौकसां देवानामर्च्चितं देवैः पूज्यमानमित्यर्थः। मतिबुद्धिपूजार्थेभ्यश्च इति वर्त्तमाने क्तः। क्तस्य च वर्त्तमाने इति षष्ठीतमीश्वरम् अर्घेण पूजार्थोदकेन। पादार्घाभ्याञ्चेति। यत् प्रत्ययः। षट् तु त्रिष्वर्घमर्घार्थे पाद्यं पादाय वारिणीत्यमरः। अर्च्चयित्वा पूजयित्वा अस्य ईश्वरस्याराधनाय सखीभ्यां जयाविजयाभ्यां समेतां प्रयतां नियतां तनूजां सुतां समादिदेश आज्ञापयामास॥५८॥

प्रत्यर्थीति। गिरिशः शिवः समाधेः प्रत्यर्थिभूतां प्रतिपक्षभूतामपि। सुप्सुपेति समासः। श्रोतुमिच्छन्तीं शुश्रूषमाणां सेवमानाम्। सेवका हि सेव्ये दत्तकर्णा भवन्ति। इच्छार्थे सन् प्रत्ययः। ज्ञाश्रुस्मृदृशां सनः इत्यात्मनेपदम्। तां पार्वतीमनुमेने अङ्गीचकार न प्रतिषिद्धवानित्यभिप्रायः। न चैतावता धीरस्य कश्चिद्विकार इत्याशयः। धीरत्वमेवार्थान्तरन्यासेनाह विकारेति। विकारस्य प्रकृतेरन्यथात्वस्य

अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषाञ्चोपनेत्री।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः॥६०॥

हेतौ स्त्रीसन्निधानादिकारणे सति विद्यमानेऽपि येषां चेतांसि न विक्रियन्ते न विकृतिं नयन्ते तएव धीराः। विक्रियन्ते इति कर्म्मणि लट्॥५९॥

शुश्रूषाप्रकारमेवाह

अविचितेति। सुकेशी शोभनमूर्द्धजा॥ स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधादिति ङीप्। सा पार्व्वती अवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा वेदेर्नियमवेदिकायाः सम्मार्ज्जने दक्षा नियमविधेर्नित्यकर्म्मानुष्ठानस्य यानि जलानि तेषां बर्हिषां कुशानाञ्च उपनेत्री आनेत्री सती तस्य गिरिशस्य शिरसि चन्द्रस्य पादैः रश्मिभिः॥ पादा रश्म्यङ्घ्रितुर्यांशाइत्यमरः। नियमितपरिखेदा निवर्त्तितपरिश्रमा सती अहन्यहनि प्रत्यहम्। अव्ययं विभक्तिसमीपसमृद्धीत्यादिना नियतार्थेऽव्ययीभावः॥ नपुंसकादन्यतरस्यामिति अच्प्रत्ययः। गिरिशमुपचचार शुश्रूषाञ्चक्रे॥६०॥

इति श्रीकालिदास कृतौ कुमारसम्भवे महाकाव्ये उमोत्पत्तिर्नाम प्रथमः सर्गः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां प्रथमः सर्गः ॥

---

## द्वितीयः सर्गः ।

तस्मिन् विप्रकृताः काले तारकेण दिवौकसः।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥१॥

तस्मिन्निति। तस्मिन् काले पार्व्वतीशुश्रूषाकाले तारकेण तारकनाम्ना वज्रनखपुत्रेण केनचिदसुरेण विप्रकृताः उपद्रुताः दिवमोकः स्थानं येषां ते दिवौकसः देवाः। दिवं स्वर्गेऽन्तरीक्षे चेति विश्वः। द्यौः ओक इति पक्षे पृषोदरादित्वात् साधुः॥ तुरं त्वरितं साहयतज्ञमभिभवतीति तुराषाट्। साहयतेश्चौरादिकात् क्विप्॥ नहि वृतिवृषि इत्यादिना पूर्व्वपदस्य दीर्घः प्रकृतिग्रहणे प्रातिपदिकस्यापि ग्रहणात्। मुग्धबोधकारस्तु तुराशब्दहावन्तमुत्तवाचष्टे तं तुरासाहं देवेन्द्रम्॥ अजादिषु साक्रूपात्वाभा-

तेषामाविरभूद्‌ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥२॥
अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।

त्वात् सहेः साडः सः इति षत्वं न भवति ॥ पुरोधाय पुरस्कृत्य स्वयम्भुवो ब्रह्मण इदं स्वायम्भुवम् ॥ संज्ञापूर्व्वकविधेरनित्यत्वात् ओर्गुणः इति गुणो न ॥ धाम स्थानं ययुः ब्रह्मलोकं जग्मुरित्यर्थः ॥१॥

तेषामिति । परिम्लाना परिक्षीणा मुखश्रीर्मुखकान्तिर्येषां तथोक्तानां तेषां देवानां ब्रह्मा सुप्तपद्मानां मुकुलितारविन्दानां सरसां प्रातर्दीधितिमान् सूर्य्य इव आविरभूत् प्रकाशोऽभूदित्यर्थः। प्रकाशे प्रादुराविः स्यादित्यमरः। सूर्य्योपमानेन तेषां म्लानिहरणत्वं सूचितम्। अत्रोपमालङ्कारः। तल्लक्षणन्तु। स्वतः सिद्धेन भिन्नेन सम्मतेन च धर्म्मतः। साम्यमन्येन वर्ण्यस्य वाच्यञ्चैकपदोपमेति ॥२॥

अथेति । अथ आविर्भावानन्तरं सर्वे ते देवाः सर्वतः समन्ततोमुखानि यस्य तं सर्वतोमुखं चतुर्मुखमित्यर्थः। वाचां विद्यानामीशं सर्वस्य जगतो धातारं स्रष्टारं ब्रह्माणं प्रणिपत्य नत्वा अर्थादनपेताभिरर्थ्याभिः अर्थयुक्ताभिरित्यर्थः। धर्म्मपथ्यर्थन्याया-

वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥३॥
नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥४॥
यदमोघमपामन्तरुप्तं बीजमज त्वया ।

दनपेते इति यत्प्रत्ययः । वाग्भिरुपतस्थिरे तुष्टुवुरित्यर्थः । उपाद्देवपूजासङ्गतिकरणमित्र करणपथिष्विति वक्तव्यमित्यात्मनेपदम् ॥३॥

स्तुतिप्रकारमाह नमइत्यादिभिर्द्वादशभिः श्लोकैः ।

नमइति । हे भगवन्नित्यध्याहार्य्य व्याख्येयम् । सृष्टेःप्राक् । अन्यारादित्यादिना अञ्चूत्तरपदयोगेन पञ्चमी । केवलात्मने एकरूपाय आत्मा वा इदमेकएवाग्र आसीदिति श्रुतेः । निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोरित्यमरः । पश्चात् सृष्टिप्रवृत्तिकाले । विभज्यते अनेनेति विभागः गुणानां सत्वादीनां त्रयमेव विभागो यस्य तस्मै । गुणाः सत्वं रजस्तम इत्यमरः । भेदम् उपाधिं सृष्टृत्वादिकमित्यर्थः उपेयुषे प्राप्तवते । उपेयिवाननाश्वाननूचानश्चेति निपातः । अतएव त्रिमूर्त्तये ब्रह्मविष्णुरुद्ररूपिणे तुभ्यं नमः । नमः स्वस्तीत्यादिना चतुर्थी । उक्तञ्च । नमो रजोजुषे सृष्टौ स्थितौ सत्वमयाय च । तमोरूपाय संहारे त्रिरूपाय स्वयम्भुवे इति ॥४॥

**अतस्त्वराचरं विश्वं प्रभवस्तस्य गीयसे ॥५॥**
**तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः॥६॥**

यदिति। न जायतइत्यजः हे अज अपां जलानाम् अन्तः त्वया यदमोघम् अवन्ध्यं वीजं वीर्य्यमुप्तं निक्षिप्तम्। सुप्तमिति पाठे विसृष्टमित्यर्थः। शुक्रं तेजोरेतसी च वीजवीर्य्येन्द्रियाणि चेत्यमरः। अतस्ते वीजात् चराचरं स्थावरजङ्गमात्मकम्। समाहारे द्वन्द्वैकवद्भावः। विश्वं जगत् उत्पन्नमिति शेषः। तस्य विश्वस्य प्रभवत्यस्मादिति प्रभवः कारणं गीयसे। आह मनुः। अपएव ससर्ज्जादौ तासु वीजमवासृजत्। तदण्डमभयद्धैमं सहस्रांशुसमप्रभमिति। अदश्चराचरं विश्वप्रसवस्तस्य गीयते इति पाठे अदइदं चराचरं विश्वं तस्य वीजस्य प्रसवो गीयते लोके इति शेषः ॥५॥

तिसृभिरिति। एकः सृष्टेः प्राक् केवलः त्वं तिसृभिरवस्थाभिः त्रैगुण्यमयीभिः हरिहरब्रह्मस्वरूपाभिः महिमानं निजशक्तिम् उदीरयन् विजृम्भयन् प्रलयस्थितिसर्गाणाम् अन्तस्थितुत्पत्तीनां कारणतां गतः। इदं पश्चाद्भेदमुपेयुषे इत्यस्य विवरणमतो न गतार्थत्वदोषः ॥६॥

स्त्रीपुंसावात्मभागौ ते भिन्नमूर्त्तेः सिसृक्षया।
प्रसूतिभाजःसर्गस्य तावेव पितरौ स्मृतौ॥७॥
स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते।
यौ तु स्वप्नावबोधौ तौभूतानांप्रलयोदयौ ८

भूतसृष्टिकर्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्त्तमितो ब्रह्मणो भेदमाह॥

स्त्रीपुंसाविति। स्त्री च पुमांश्च स्त्रीपुंसौ। अचतुरेत्यादिना अच् प्रत्ययान्तोनिपातः। सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्त्तेर्द्विधाकृतविग्रहस्य ते तव आत्मनो देहस्य भागावात्मभागौ। आत्मा जीवे धृतौ देहे स्वभावे परमात्मनीति विश्वः। तावेव भागौ प्रसूतिभाजः उत्पत्तिभाजः सृज्यत इति सर्गः तस्य निजसृष्टेरित्यर्थः। माता च पिता च पितरौ। पिता मात्रेत्येकशेषः। स्मृतौ इत्युक्तौ इति शेषः। अत्र मनुः। द्विधा कृत्वात्मनोदेहमर्द्धेन पुरुषोऽभवत्। अर्द्धेन नारी तस्यां स विराजमसृजत्प्रभुरिति॥ ७॥

स्वकालेति। स्वकालस्य परिमाणेन। चतुर्युगसहस्राणि ब्रह्मणोदिनमुच्यत इत्युक्तरूपेण व्यस्तं विभक्तं रात्रिन्दिवं रात्र्यहनी यस्य तस्य। यद्यप्यचतुरादिसूत्रेण रात्रौ च दिवा च रात्रिन्दिवमिति सप्तम्यर्थे वृत्तो द्वन्द्व इत्युक्तं तथापि दोषामन्यमहर्दिवाम-

जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥९॥
आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।

व्या रात्रिरित्यादौ कर्मवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथञ्चित्प्रयोगबलादाश्रयणीयम्। ते तव यौ तु स्वप्नावबोधौ तावेव भूतानां प्रलयोदयौ संहारसृष्टी। यदाहुः। यदा स देवो जागर्त्ति तदैव चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते इति। एतच्च दैनन्दिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्त्र ब्रह्मणोवर्षशतान्ते भावित्वात्॥ ८॥

जगदिति। हे भगवन् त्वं जगद्योनिः जगत्कारणं स्वयमयोनिः आदित्वादकारणकः। त्वम्। अन्तयतीत्यन्तः पचाद्यच्। जगतः अन्तः जगत्संहर्त्ता स्वयं निरन्तकःनित्यत्वादन्तरहितः। त्वंजगतामादिः जगदादिःसृष्टे:प्रागपि सन्नित्यर्थःअतएव त्वमनादिः आदिरहितः। त्वं जगतामीशः नियन्ता स्वयंनिरीश्वरः अनियम्यइत्यर्थः। यतोवा इमानि भूतानि जायन्ते इत्यादिश्रुतिरेवात्र प्रमाणम्। अत्रायोनिरित्यादौ नञ् तत्पुरुषाश्रयणे विरोधः बहुव्रीहिणा तु तत्परिहारइति विरोधाभासालङ्कारः। यथाहुःविरोधाभासत्वे विरोध इति॥ ९॥

आत्मनाकृतिना चत्वामात्मन्येवप्रलीयसे १०
द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मोलघुर्गुरुः।
व्यक्तोव्यक्तेतरश्चासिप्राकाम्यन्तेविभूतिषु ११

तव तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह।

आत्मानमिति। हे भगवन् त्वं आत्मानं लोकानुग्रहार्थं ब्रह्मरूपेणोत्पिपादयिषितं स्वस्य रूपम् आत्मनैव वेत्सि जानासि सर्वापि क्रिया कर्तव्यार्थज्ञानपूर्व्विकेति भावः। तथात्मानम् आत्मनैव आत्मन्येवेत्यत्रापि सम्बध्यते स्वस्मिन्नेव सृजसि अधिष्ठानमपि स्वयमेवेत्यर्थः। स्वमहिम्नि प्रतिष्ठितमिति श्रुतेः। कृतिना समर्थेन इदं सर्व्वत्र सम्बध्यते। आत्मना स्वेनैव आत्मन्येव प्रलीयसे स्वस्मिन्नेव प्रलीनो भवसि। लीयतेर्दैवादिकात्कर्त्तरि लट्। प्रकृत्यादिभ्य उपसंख्यानमिति वार्त्तिकात्सर्व्वत्रात्मनेति तृतीया। न हि ते प्रपञ्चस्येव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः॥ १०॥

द्रव इति। त्वमित्यनुषज्यते। हे भगवन् त्वंद्रवः सरित्समुद्रादिवद्रसात्मकोऽसि। सङ्घातेन निविड़संयोगेन कठिनः महीधरादिवत्। स्थूलः इन्द्रियग्रहणयोग्यो घटादिवत्। सूक्ष्मोतीन्द्रियः परमाणा

उद्घात प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।
कर्मयज्ञः फलंस्वर्गस्तासांत्वंप्रभवोगिराम्॥१२॥

दिवत्। लघुरुत्पतनयोग्यतूलादिवत्। गुरुर्हैमाद्रिवत् अचलनीयः। व्यक्तः कार्यरूपोऽसि व्यक्तेतरः कारणरूपश्चासि। एवं विभूतिष्वणिमादिषु ते तव प्रकामस्य भावः प्राकाम्यं यथाकामत्वम्॥ ११॥

उद्घातइति। हे भगवन् यासां गिरां वाचां उद्घातः उपक्रमः प्रणव ओङ्कारात्मकः। ओङ्कारप्रणवौ समाविति स्यादभ्यादानमुद्घात आरम्भइति चामरः। इदमुपसंहारस्याप्युपलक्षणम्। ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वतः। इत्युक्तेः। क्षतंपूर्व्वम्परस्तात्त्व विशेषत इति निरुक्तपरिशिष्टयोर्यास्कः। नीयन्ते एभिरर्थविशेषादिति न्यायाःस्वराः। उक्तञ्च। स्वरविशेषादर्थप्रतिपत्तिः। यथेन्द्रशत्रुः स्वरतोऽपराधादिति। यासां गिरां त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितैः स्वरैरुदीरणमुच्चारणं यासां कर्म्म प्रतिपाद्यमित्यर्थः यज्ञोज्योतिष्टोमादिः न तु चैत्यवन्दनादिरिति भावः। फलं स्वर्गः कर्म्मद्वारेति शेषः। कर्म्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणम्। त्वं तासां गिरां वेदानामित्यर्थः। प्रभवत्यस्मादिति प्रभवः कारणम् प्रणेता स्मर्त्ता वा मतभेदेन॥ १२॥

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥१३॥
त्वं पितॄणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥१४॥

साङ्ख्यमतेन स्तुवन्ति

त्वामिति। हे भगवन् त्वां पुरुषस्यार्थो भोगापवर्गरूपस्तदर्थं प्रवर्त्तत इति पुरुषार्थप्रवर्त्तिनीं तां प्रकृतिं त्रैगुण्यात्मकं मूलकारणम्। प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणइति यादवः। आमनन्ति कथयन्ति म्नाअभ्यासइतिधातोर्लट्। पाघ्राध्मास्थाम्नेत्यादिना मनादेशः। प्रकृतिपुरुषभेदाग्रहणात् प्रकृतिपुरुषाभेदव्यपदेशः। त्वामेव। तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनम् उदासीनं कूटस्थं पुरुषं विदुः वि दन्ति। विदोलटोवेति झेर्जुसादेशः। अजामेकां लोहितशुक्लकृष्णामिति श्रुतिरत्र प्रमाणम्॥ १३॥

त्वमिति। हे भगवन् त्वं पितॄणाम् अग्निष्वात्तादीनामपि पिता तेषामपि तर्पणीयइत्यर्थः देवानामिन्द्रादीनामपि देवता तेषामपि यजनीयइत्यर्थः। परतोऽपि परश्चासि सर्वोत्तरोऽसीत्यर्थः। इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धि बुद्धेरात्मा महान्परः॥ महतः परमव्यक्तमव्यक्तात्

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः
वेद्यश्च वेदिता चासि ध्याता ध्येयश्च यत्परम्॥१५॥
इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः।

पुरुषः परः। पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिरिति सर्वोत्तरत्वाभिधानात्। वेधसां दक्षादीनामपि विधाता स्रष्टासि॥ १४॥

त्वमेवेति। शश्वत् सिद्धः शाश्वतः। शैषिकोऽण् प्रत्ययः। यद्यपि कालाट्ठञिति ठञपवादः अतएव सूत्रकारस्यापि प्रयोगः। येषाञ्च विरोधः शाश्वतिक इति तथापि प्रयोगवशात् साधुरिति वामन इति शाश्वतः प्रयुक्तः। शाश्वतस्त्वमेव। हूयत इति हव्यम् हविराज्यादिकम्। जुहोतीति होता यजमानश्चासि भोज्यमभ्यवहार्यमन्नम्। भोज्यं भक्ष्ये इति निपातनात्कुत्वाभावः। भोक्ता अन्नादश्चासि। वेद्यं साक्षात्कार्यं वस्तु वेदिता साक्षात्कर्त्ता चासि। ध्याताऽध्येता यत्परं वस्तु ध्येयं तच्चासि। साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम्॥ १५॥

इतीति। वेधाः ब्रह्मा इति तेभ्यो देवेभ्यः। आख्यातोपयोगे इत्यपादानत्वात्पञ्चमी। यथार्थाः सत्याः अतएव हृदयं गच्छन्तीति हृदयङ्गमाः मनोहराः। खच्प्रकरणे गमेःसुप्युपसंख्यानम् इति खच्प्रत्ययः।

प्रसादाभिमुखोवेधाःप्रत्युवाचदिवौकसः ॥१६॥
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानांचरितार्थाचतुष्टयी॥१७॥
स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्यवः ।

अर्थ्वद्भिरिति । तदजन्तस्य सुमिति सुमागमः । स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखोऽनुग्रहप्रवणः सन् दिवौकसो देवान् प्रत्युवाच ॥ १६ ॥

अथ कविराह पुराणस्येति । द्रव्यगुणक्रियाजाति-भेदेन चत्वारोऽवयवा यस्याइति चतुष्टयी चतुर्विधा संख्याया अवयवे तयप् इतितयप् । टिड्ढाणञ्द्वय सजितयादिना ङीप् । शब्दानां प्रवृत्तिःवैखरीप्रमुखा वाग्वृत्तिः । उक्तञ्च । वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा । द्योतितार्था च पश्यन्ती सूक्ष्मावागन पायिनीति । पुराणस्य पुरातनस्य पृषोदरादित्वात् साधुः । कवेः कवयितुस्तस्य ब्रह्मणश्चतुर्भिर्मुखैः समी-रिता सती । तद्धितार्थेत्यादिना उत्तरपदसमासः । समाहारे चतुर्मुखी स्यात् चतुर्मुखोच्चारणाच्चातु-र्विध्यं सफलमासीदित्यर्थः ॥ १७ ॥

भगवानाह । स्वागतमिति । हे प्राज्यविक्रमाः प्रभूतपराक्रमाः देवाः । प्राज्यं भूरि प्रभूतञ्चेति यादवः । स्वान् स्वकीयानधीकारान् । नियोगान् ।

युगपद्युगबाहुभिः प्राप्तेभ्यः प्राज्यविक्रमाः १८
किमिदं द्युतिमात्मीयां न बिभ्रति यथापुरा।
हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः १९
प्रथमादर्च्चिषामेतदनुज्ञीर्णं सुरायुधम्।

उपसर्गस्य घञीति वा दीर्घः। प्रभावैः सामर्थ्यैः अवलम्ब्य आस्थाय यथाधिकारं स्थित्वापीत्यर्थः। युगपत्समकालं प्राप्तेभ्यः। युगपत्प्राप्त्या महत्कार्य्यमनुमीयत इतिभावः। युगबाहुभ्यः दीर्घबाहुभ्य इत्यर्थः। आजानुबाहुत्वं भाग्यलक्षणम्॥ वो युष्मभ्यम्॥ बहुवचनस्यावस्नसाविति वसादेशः कर्म्मणा यमभिप्रैतीत्यत्र कर्मपदेन क्रियाग्रहणात् संप्रदानत्वम्॥ स्वागतं शोभमानमागमनम्। काकुरत्रानुसन्धेया॥ १८॥

किमिति। वत्सा इत्युत्तरश्लोकीयं सम्बोधनमत्रापानुषञ्जनीयम्। हे वत्साः पुत्रकाः हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणीव दीप्तिताराङ्कतारेषु ज्योतिरिति शास्वतः। वो युष्माकं मुखानि पुरा यथा पूर्व्वमिव आत्मीयां द्युतिं न बिभ्रति इदं किं किन्निबन्धनमित्यर्थः। किमिदमित्यनेन वाक्यार्थः परामृश्यते॥ १९॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः प्रथमादित्यादिभिः—

वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते॥२०॥
किञ्चायमरिदुर्वारः पाणौ पाशः प्रचेतसः।
मन्त्रेणाहतवीर्यस्य फणिनो दैन्यमाश्रितः २१
कुवेरस्य मनःशल्यं शंसतीव पराभवम्

प्रशमादिति। अर्च्चिष्मतां तेजसां प्रशमात् निर्व्वाणात् अनुज्ञीर्णसुरायुधम् अनुदितचित्रप्रभमित्यर्थः। एतत् वृत्रस्य हन्तुरिन्द्रस्य कुलिशं वज्रं कुण्ठिता अश्रयो यस्य तत् कुण्ठिताश्रि कुण्ठितकोटीव लक्ष्यते दृश्यते॥ २०॥

किञ्चेति। किञ्चायम् अरिदुर्व्वारो रिपुदुष्प्रधर्षः प्रचेतसो वरुणस्य। प्रचेता वरुणः पाशीत्यमरः। पाणौ पाशरज्जुरायुधविशेषः। मन्त्रेण गारुड़ेन हतवीर्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोचत्वमाश्रितः। अत्र फणिनिष्ठदैन्यस्य पाशे असम्भवात् दैन्यमिव दैन्यमिति कल्पनादसम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारः॥ २१॥

कुवेरस्येति। अपविद्धा त्यक्ता गदा येन सः अपविद्धगदः अतएव भग्नशाखो द्रुमइव स्थितः कुवेरस्य वाङ्कः मनःशल्यं दुःखहेतुत्वान्मनसः शल्यप्रायमित्यर्थः। पराभवं शत्रुकृतमिति शेषः। शंसतीव

अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥
यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् २३
अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् २४

कथयतीव लक्षणया अनुमापयतीत्यर्थः बाहौ मुख्य-कथनस्यासम्भवात् इवशब्दोऽप्यत एव ॥ २२ ॥

यमोऽपीति । अस्तं नाशम् इताः प्राप्ताः अस्त-मिति मकारान्तमव्ययम् । तस्य द्वितीयाश्रितातीत-पतितगतात्यस्तप्राप्तापन्नैरिति समासः । अस्तमिता-स्त्विषो यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन् अमोघेऽपि प्रागिति भावः । अस्मिन् दण्डे निर्वाणालातस्य शान्तोल्मुकस्य । अलातं नाम भूलेखनशलाका तस्य यल्लाघवं क्षौद्र्यं तत् कुरुते ; अलातमुल्मुकं ज्ञेयमिति हलायुधः । निर्वाणोऽवात इति निपातनान्निष्ठानत्वम् । अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालङ्कारः ॥ २३ ॥

अमी इति । प्रतापक्षतया तेजसां क्षयेन शीतला अमी आदित्याश्च द्वादशेति शेषः । कथं केन हेतुने-त्यर्थः । चित्रन्यस्ताश्चित्रलिखिता इव प्रकाममत्यन्तम् आलोकनीयतां द्रष्टव्यतां गताः प्राप्ताः ॥ २४ ॥

पर्य्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥२५॥
आवर्ज्जितजटामौलिविलम्बिशशिकोटयः।
रुद्राणामपि मूर्द्धानः क्षतहुङ्कारशंसिनः ॥२६॥
लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥२७॥

पर्य्याकुलत्वादिति। मरुतां वायूनां सप्तसप्तानामिति शेषः। पर्य्याकुलत्वात् स्खलितगतित्वाद्धेतो वेंगस्य भङ्गः अम्भसां जलानां प्रतीपगमनादुत्तानावरोहादित्यर्थः। ओघस्य संरोधः प्रवाहप्रतिबन्ध इव अनुमीयते ॥ २५ ॥

आवर्ज्जितेति। आवर्ज्जितेषु परिभवदुःखावनन्नेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखा येषां ते तथोक्ताः रुद्राणामपि एकादशानामिति शेषः। मूर्द्धानः क्षतं हुङ्कारं शंसन्तीति तथोक्ताः हुङ्कारक्षतस्यानुमापका इत्यर्थः। हुङ्काराशस्त्रा हि रुद्रा इति भावः॥ २६ ॥

लब्धेति। प्रथमं पूर्व्वं लब्धप्रतिष्ठाः लब्धस्थितयः लब्धावकाशा इत्यन्यत्र यूयं बलवत्तरैः पौरुषातिरेकात् प्रबलतरैः। निरवकाशैरित्यपरत्र परैः शत्रुभिः उत्सर्गाः सामान्यशास्त्राणि मा हिंस्यादित्येवमादीनि। अपोद्यन्ते एभिरित्यपवादैः गामालभेत-

तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता २८

ततो मन्दानिलोद्धूतकमलाकरशोभिना।
गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥२९॥

तत्रादिभिर्विशेषशास्त्रैरिव किं कृतव्यावृत्तयः कृतप्रतिष्ठाभङ्गाः कृतविषयसङ्कोचरूपबाधा इत्यन्वयः। विषयसङ्कोच एव बाध इत्याचार्याः। निषेधशास्त्रस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनात् विषयसङ्कोच इत्यलमतिगहनावगाहनेन ॥ २७ ॥

तदिति। तत्तस्मात् कारणात् हे वत्साः पुत्रकाः। वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्सन्तु वक्षसीति विश्वः। स्वयं पितामहत्वादित्साहित्यामन्त्रयते। सम्भूयागताः समागताः इतो मत्तः किं प्रार्थयध्वं किमिच्छतेत्यर्थः ब्रूत। लोकरक्षणे यूयमेव कर्तार इत्याह मयि लोकनां सृष्टिः, रक्षा युष्मासु अवस्थिता। अतस्तद्-र्थमपि नास्ति मदपेक्षेत्यर्थः॥ २८ ॥

ततइति। ततो भगवत्प्रश्नानन्तरं वासवः इन्द्रः गुरुं वृहस्पतिं गुरू गीष्पतिपित्राद्याविंत्यमरः। मन्दानिलोद्धूतो यः कमलाकरः स इव शोभत इति तेन तथोक्तेन नेत्राणां सहस्रेण नोदयामास प्रेरयामास। सहस्रग्रहणमास्थातिशयार्थम्। अनिमेषाणामपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते॥ २९॥

स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥३०
एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥ ३१

स इति । हरेरिन्द्रस्य । इन्द्रो दुश्च्यवनो हरिरिति हलायुधः । सहस्रान्नयनेभ्योऽधिकं सहस्रनयनाधिकं तदगोचरदर्शित्वादिति भावः । द्वे नेत्रे यस्य तत् द्विनेत्रम् । प्रसिद्धाच्चक्षुषोऽयं विशेष इत्यर्थः । चक्षुश्च-क्षुर्भूतः । चक्षुषस्तारोपस्य प्रकृतोपयोगात्परिणा-मालङ्कारः । स वाचस्पतिः । कस्कादित्वादलुक् सत्वं षष्ठ्याः पतिपुत्रेत्यादिना सत्वमिति स्वामी तन्नच्छन्द-विषयत्वात् । प्राञ्जलिः सन् जलजासनं ब्रह्माणमि-दमुवाच ॥ ३० ॥

एवमिति । हे भगवन् षड्गुणैश्वर्यसम्पन्न यदात्थ नोऽस्माकं परैरिति यद् ब्रवीषि । ब्रुवः पञ्चा-नाम् इत्यादिना हादेशः । वर्त्तमानसामीप्ये वर्त्तमान वद्वेति वर्त्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । आहेति भूते णलन्तभ्रमवदिति । आहेत्यप वचनम् । तदेवं सत्यं नोऽस्माकं पदम् अधिकारः परैः शत्रुभिः आमृष्टम् आक्रान्तम् । हे प्रभो । प्रत्येकं प्रति-पुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः सर्वान्तर्यामी-त्यर्थः । कथं न ज्ञास्यसि न वेत्सि । वर्त्तमानेऽपि

भवल्लब्धवरोदीर्णस्तारकाख्योमहासुरः ।
उपप्लवायलोकानांधूमकेतुरिवोत्थितः ॥३२॥
पुरेतावन्तमेवास्यतनोति रविरातपम ।
दीर्घिकाकमलोन्मेषोयावन्मात्रेणसाध्यते ३३

वचनभङ्ग्या भविष्यन्निर्द्देशः प्रसिद्धः। अपङ्क्ते त्वः अकर्म्मकाच्चे त्यात्मनेपदविकल्पः। ३१ ॥

उक्तमेवप्रपञ्चयति।

भवल्लब्ध इति । भवतस्त्वत्तो लब्धेन वरेणोदीर्ण उद्धतः। तारक इत्याख्या नामधेयं यस्य सः तारकाख्यः। महानसुरो महासुरः। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति तत्पुरुषः। धूमकेतुरुत्पातविशेष इव लोकानामुपप्लवाय उपद्रवाय उत्थितः उत्पन्नः ॥ ३२ ॥

पुर इति। यस्य तारकस्यपुरेरविः सूर्य्यः तावन्तं तावन्मात्रमेव आतपं तनोति। यावन्मात्रेण यावतैव यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा । अल्पपरिमाणेत्यर्थः। मात्रा परिच्छेदे अल्पे च परिमाणे। मात्रं कार्त्स्न्येऽवधारण इत्यमरः। दीर्घिकासु क्रीड़ावापीषु कमलानामुन्मेषो विकाशः साध्यते निष्पाद्यते। कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीतया पुरे प्रकाशत इत्यभिप्रायः ॥ ३३ ॥

सर्वाभि:सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ३४
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
नवातिवायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ३५
पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥३६॥

सर्व्वाभिरिति । चन्द्रस्तं तारकं सर्वदा कृष्णपक्षेऽपीत्यर्थः । सर्व्वाभिः कलाभिः निषेवते । कला तु षोड़शो भाग इत्यमरः । केवलां हरचूड़ामणीकृतां शिवशिरोमणीकृतां लेखां नादत्ते न गृह्णाति ॥ ३४ ॥

व्यावृत्तेति । वायुः स्तेनस्य भावः कर्म्म वा स्तेयं चौर्य्यम् । स्तेनाद्यन्नलोपश्चेति यत्प्रत्ययः नलोपश्च । कुसुमानां स्तेयं तस्मात् स्तेयाभियोगात् दण्डाद्वा साध्वसं भयं तस्माद्धेतोः उद्याने व्यावृत्तगति र्निवृत्तोद्यानसञ्चारः सन्नित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । तत्पार्श्वे तत्समीपे तालस्य वृन्तैरुद्ग्रथ्यते तालस्येव वृन्तमस्येति वा तालवृन्तं तस्यानिलात् व्यजनसञ्चारपवनात् अधिकं यथा तथा न वाति । व्यजनं तालवृन्तकमित्यमरः ॥ ३५ ॥

पर्य्यायेति । ऋतवः षट् वसन्तादयः पर्य्यायसेवां क्रमसेवामुत्सृज्य पुष्पाणां सम्भारे संग्रहे तत्पराः आसक्ताः सन्तइत्यर्थः । तत्परे प्रसितासक्ताविज्यमरः

तस्योपायनयोग्यानि रत्नानि सरितां पतिः।
कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥३७॥
ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥३८॥
तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितैः।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः ॥३९॥

उद्यानपालैरुद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा तं तारकमुपासते सेवन्ते। शीतोष्णादिदोषप्रकाशनन्तु दूरापास्तमित्यर्थः ॥३६॥

तस्येति। सरिताम्पतिः समुद्रः तस्य तारकस्य उपायनानां प्राभृतानां योग्यानि। प्राभृतं तु प्रदेशनम्। उपायनमित्यमरः। रत्नानि अम्भसामन्तः आ निष्पत्तेः परिपाकपर्य्यन्तम्। विकल्पादसमासः। कथमपि महता यत्नेन प्रतीक्षते कदा वा परिपच्येरन्नित्यैकाग्र्येण पालयतीत्यर्थः ॥३७॥

ज्वलदिति। किञ्चेति चार्थः। ज्वलन्त्यो मणीनां शिरोरत्नानां शिखाः ज्वालाः येषान्ते वासुकिप्रमुखा भुजङ्गाः सर्पाः सिद्धास्च ध्यन्यन्ते। भुजङ्गः सिद्धसर्पयोरित्यमरः। निशि स्थिरप्रदीपतामनिर्वाणदीपत्वमेत्य एनं तारकं पर्युपासते परित्य सेवन्ते ॥३८॥

तत्कृतेति। इन्द्रोऽपि तेन तारकेन कृतं तत्कृतमनुग्रहं प्रसादम् अपेक्षत इति तथोक्तः सन् मुहुर्दूतहा-

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः॥४०॥
तेनामरवधूहस्तैः सदयालूनपल्लवाः।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः॥४१॥
वीजयति सहि संसुप्तः श्वाससाधारणानिलैः।
चामरैः सुरवन्दीनां वाष्पशीकरवर्षिभिः॥४२॥

रितैः दूतप्रापितैः कल्पद्रुमाणां विभूषणैस्तत्प्रसूनैरित्यर्थः। तं तारकम् अनुकूलयति अनुकूलं करोति॥३९॥

इत्थमिति। इत्थम् उक्तप्रकारेण रविशशिपवनोदधिभुजङ्गमसुरेन्द्रैराराध्यमानोऽपि भुवनत्रयं क्लिश्नाति पीड़यति। तथाहि दुर्जनः प्रत्यपकारेण प्रतीकारेणैव शाम्येत् शान्तो भवेत् उपकारेण तु न शाम्येत् प्रत्युत प्रकुप्यतीति भावः॥४०॥

तेनेति। तेन तारकेण अमरवधूहस्तैः सुकुमारैरिति भावः। तैरपि सदयम् आलूनाः अवतंसार्थं छिन्नाः पल्लवा येषां ते नन्दनद्रुमाः। छेदाश्च पाताश्च छेदपाताः तेषाम् अभिजानन्तीत्यभिज्ञाः कृद्योगात् कर्म्मणि षष्ठी। क्रियन्ते॥४१॥

वीजयति इति। हि यस्मात् कारणात् स तारकः संसुप्तः सन् श्वाससाधारणो निश्वाससमानः अनिलः येषां तैः ततोऽप्याधिक्ये निद्राभङ्गभयादिति भवाः।

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु॥४३॥
मन्दाकिन्याः पयःशेषं दिग्वारणमदाविलम्।
हेमाम्भोरुहशस्यानां तद्वाप्यो धाम साम्प्रतम्॥४४॥

बाष्पशीकरवर्षिभिः। तासां स्त्रीणां रोदनस्यायमवसर इति भावः। सुरबन्दीनां सुरप्रग्रहस्त्रीणां संबन्धिभिः। प्रग्रहापग्रहौ बन्द्यामित्यमरः। चामरैर्वीज्यते॥४२॥

उत्पाट्येति। तेन तारकेण हरितां सूर्याश्वानाम्। हरित् सूर्य्ये च सूर्याश्वे वर्णे च हरिते दिशीति विश्वः। खुरैः शफैः क्षुण्णानि चूर्णितानि। एतेन तेषामतयौग्न्यतंत्र सूचितम्। मेरुशृङ्गाण्युत्पाट्य स्वेषु वेश्मसु वेश्मस्विति बहुवचनेनास्य भुवनत्रयनिवासः सूचितः। आक्रीडन्ते एष्विति तत्राक्रीडाः ते च ते पर्वताः कल्पिताः कृताः॥४३॥

मन्दाकिन्या इति। सांप्रतं सम्प्रति मन्दाकिन्याः भागीरथ्या दिग्वारणानां दिग्गजानां मदैराविलं कलुषं पयो जलमेव शिष्यत इति शेषं शिष्टम्। कर्म्मण्यण्प्रत्ययः। लिप्यन्यलोपयुजत्तद्‌इति नपुंसकत्वम्। तर्हि कनककमलानि क्व गतानीत्याह हेमेति। हेमाम्भोरुहाण्येव शस्यानि तेषान्तु तस्य वाप्यः तद्वाप्य एव

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि ॥४५॥
यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥४६॥
उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥४७॥

धाम स्थानम् । सर्व्वाण्यप्युत्पाद्य सुदीर्घिकास्वेव प्रतिरोपितवानित्यर्थः ॥ ४० ॥

भुवनेति । तस्य तारकस्य आपातात् समापत्तेः भयात् विमानानां पथि खिलीभूते अप्रहतीभूते सति । द्वे खिलाप्रहते समे इत्यमरः । स्वर्गिभिर्देवै र्भुवनानामालोकने प्रीतिर्नानुभूयते ॥ ४५ ॥

यज्वभिरिति । यज्वभि र्विधिवदिष्टवद्भिः यज्वा तु विधि नेष्टवानित्यमरः । सुयजोङ्वनिप् इति ङ्वनिप् प्रत्ययः । विततेष्वध्वरेषु यज्ञेषु सम्भृतं दत्तं हव्यं हविः मायी मायावी । व्रीह्यादित्वादिति प्रत्ययः । स तारको नोऽस्माकं मिषतां पश्यतां पश्यत्सु सत्स्वित्यर्थः । षष्ठी चानादर इति षष्ठी । जातवेदा वह्निरेव मुखं तस्माज्जातवेदोमुखात् आच्छिनत्ति आक्षिप्य गृह्णातीत्यर्थः ॥ ४६ ॥

उच्चैरिति । किञ्चेति चार्थ । तेन तारकेण उच्चै

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ॥
वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ४८
जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ४९

रत्नतः उच्चैःश्रवा नाम हयो रत्नमिव हयरत्नम् अश्वश्रेष्ठः ॥ रत्नं श्रेष्ठे मणावपीति विश्वः । अस्य शुभ्रत्वादुत्तमश्चेतत् । देहबद्धं बद्धदेहं मूर्त्तिमदित्यर्थः आहिताग्न्यादित्वान्निष्ठायाः परनिपातः ॥ चिरकालार्ज्जितम् इन्द्रस्य यश इव आहारि अपहृतम् ॥ ४७ ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह

तस्मिन्निति । क्रूरे घातुके । नृशंसो घातुकः क्रूर इत्यमरः । तस्मिन्नसुरे नोऽस्माकं सर्वेऽप्युपायाः सन्निपातदोषत्रयस्य प्रकोपजे सान्निपातिके विकारे ज्वरादौ । सन्निपाताच्चेति वक्तव्याट्ठक् । वीर्यवन्ति सारवन्ति औषधानीव प्रतिहतक्रियाः विफलप्रयोगा भवन्ति ॥ ४८ ॥

तदेव प्रतिहत क्रियात्वमाह ।

जयेति । किञ्चेति चार्थः । नूनमनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रे अस्माकं जयाशा विजयाशंसा आसीदिति शेषः । प्रतिघातेन प्रतिहत्या उत्थितार्च्चिषा उद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेन अस्य तारकस्य कण्ठे निष्कमुरोभूषणमर्पि-

तदीयास्तोयदेष्वद्यपुष्करावर्त्तकादिषु ।
अभ्रस्यन्ति तटाघातं निर्जितैरावता गजाः ॥ ५०

तदिच्छामो विभोस्स्रष्टुं सेनानंतस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥५१॥

तमिवेत्युत्प्रेक्षा । स्वयमेव निष्कमिव स्थितमित्यर्थः तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्ति जातमिति भावः । साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्रीत्यमरः ॥४९॥

तदीया इति । अद्य सम्प्रति निर्ज्जित ऐरावतो यैस्ते तथोक्ताः तस्य तारकस्य इमे तदीयाः गजाः । पुष्कराश्च आवर्त्तकाश्च नाम आदयो येषां तेषु तोयदेषु मेघेषु तटाघातं वप्रक्रीड़ामभ्यस्यन्ति ॥ ५० ॥

तदिति । तत्तस्मात् कारणात् हे विभोस्वामिन् मोक्तं भवं त्यक्तुमिच्छवो मुमुक्षवः विरक्ताः भवस्य संसारस्य शान्तये निवृत्तये कर्मैव बन्धः तं छिनत्तीति कर्म्मबन्धच्छित् तं धर्म्ममिव आत्मज्ञानहेतुभूतमितिशेषः । तमेव विदित्वातिमृत्युमेतीति ज्ञानादेव मुक्तिः । तस्य तारकस्य शान्तये नाशाय । सेनां नयतीति सेनानीः चमूपतिः । सत्सूद्विषेत्यादिना क्विप् । तं सेनान्यं कञ्चित् स्रष्टुमिच्छामो वयमिति शेषः ॥ ५१ ॥

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित्।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम्॥ ५२
वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा॥ ५३

सेनानीस्त्वष्टेः फलमाह।

गोप्तारमिति। सुरसैन्यानां देवतासेनानां गोप्तारं रक्षितारं यं सेनान्यं पुरस्कृत्य पुरोधाय। पुरोऽव्ययमिति गतित्वात् नमस्पुरसो र्गत्योः इति सकारः। गां पृथ्वीं त्रायन्त इति गोत्राणि तान् भिनत्तीति गोत्रभिदिन्द्रः जयश्रियं बन्दीमिव बन्दीकृतां स्त्रियमिव शत्रुभ्यः सकाशात् प्रत्यानेष्यति प्रत्याहरिष्यति तं सृष्टमिति पूर्वेण सम्बन्धः॥ ५२॥

वचसीति। तस्मिन्वार्हस्पत्ये वचसि अवसिते परिसमाप्ते सति आत्मभूर्ब्रह्मा गिरं वाचं ससर्ज जगादेत्यर्थः। सा गीः सौभाग्येन मनोहरत्वेन। हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः। गर्जितात् गर्जितस्य वा अनन्तरां प्रवृत्तां वृष्टिं जिगाय जितवती। गर्जितपरत्वाद् वृष्टेरिव तद्विज्ञापनफलत्वाद्गिरः सुभगत्वमिति भावः॥ ५३॥

सम्पत्स्यतेवःकामोऽयं कालःकश्चित्प्रतीक्ष्यताम्
नत्वस्यसिद्धौयास्यामिसर्गव्यापारमात्मना ५४
इतःस दैत्यः प्राप्तश्रीर्नेतएवार्हति क्षयम् ।
विषवृक्षोऽपिसंवर्ध्यस्वयंछेत्तुमसाम्प्रतम् ५५

सम्पत्स्यत इति । अयं वो युष्माकं कामः मनोरथः सनानीरूपः सम्पत्स्यते सेत्स्यति । कश्चित् कियानपि कालः प्रतीक्ष्यताम् । तु किन्तु अस्य सेनान्यः सिद्धौ विषये आत्मना स्वयं सर्गः सृष्टिरेव व्यापारस्तं न यास्यामि नाहं स्रक्ष्यामीत्यर्थः ॥ ५४ ॥

कुत इत्याशङ्क्याह

इत इति । इतो मत्त एव प्राप्तश्रीर्लब्धोदयः स दैत्यस्तारकासुरः इतो मत्त एव क्षयं नाशं नार्हति । तथाहि । अन्योऽप्यस्तावदास्तां विषस्य वृक्षो विषवृक्षोऽपि संवर्ध्य कुतश्चित्कारणात् सम्यक् वर्धयित्वा स्वयं छेत्तुम् असाम्प्रतम् अनर्हः । असाम्प्रतमित्यनेन निपातेनाभिहितत्वात् वृक्ष इति द्वितीयान्तो न भवति अनभिहिते कर्मणि द्वितीयाभिधानात् । यथाह वामनः । निपातेनाप्यभिहिते कर्मणि न विभक्तिः परिगणनस्य प्रायिकत्वादिति ॥ ५५ ॥

वृतमिति । प्राक्पूर्वं तेन असुरेणेदमेव देवैरवध्यत्वमेव वृतं प्रार्थितम् । मया चास्मै तारकाय

इतं तेनेदमेवप्राक् मया चास्मैप्रतिश्रुतम् ।
वरेण शमितं लोकानलं दग्धुं हितत्तपः ५६॥
संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥५७॥
सहि देवः परं ज्योतिस्तमःपारेव्यवस्थितम् ।
परिच्छिन्नप्रभावर्द्धिर्न मयानच विष्णुनापू८

प्रतिश्रुतं प्रतिज्ञातम् । प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्तेति सम्प्रदानत्वाच्चतुर्थी । कर्त्तव्यञ्चै तदित्याह लोकान् दग्धुम् अलं शक्तम् पर्य्याप्तिवचनेष्वलमर्थेष्विति तुमुन् प्रत्ययः । तस्य तपस्तत्तपः वरेण वरदानेन शमितं हि मयेति शेषः ॥ ५६ ॥

संयुग इति । संयुगे युद्धे उद्यन्तं व्याप्रियमाणम् संयुगे साधुं सांयुगीनम् । प्रतिजनादिभ्यः खञिति खञ्प्रत्ययः । तं तारकं निषिक्तस्य क्वचित् क्षेत्रे क्षरितस्य । नीलः कण्ठे लोहितश्च केशेष्विति नीललोहित इति पुराणमिति स्वामी । तस्य नीललोहितस्य धूर्ज्जटेः रेतसः शुक्रस्य अंशादृते अंशं विना अन्यः कः प्रसहेत अभिभवेत् । प्रसहनमभिभव इति वृत्तिकारः ॥ ५७ ॥

कथमसावीदृक्शक्तिरित्याह

स इति । स देवो नीललोहितः तमसः पारे

उमारूपेण ते यूयं संयमस्तिमितं मनः।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लौहवत् ५९
उभेएव क्षमे वोढ़ुमुभयोर्वीजमाहितम्।
सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम ६०

परतो व्यवस्थितं तमोगुणातीतं परं ज्योतिः पर-
मात्मा हि अतएव मया परिच्छिन्नप्रभाववद्भिः अव-
गाढ़महिमातिशयो न भवति तया विष्णुना च न
अतस्तस्यासाध्यं नास्तीत्यर्थः॥ ५८॥

सम्प्रति तदंशोत्पत्तावुपायं दर्शयति

उमेति। ते कार्यप्रार्थिनो यूयं संयमस्तिमितं
समाधिनिश्चलं शम्भो र्मनः उमारूपेण उमासौन्दर्येण
रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः। ग्रन्था-
वृत्तौ नाटकादावाकारश्लोकयोरपिति विश्वः।
अयस्कान्तेन मणिविशेषेण। कस्कादिषु चेति
सकारः। लोहवत् अयोधातुमिव। तेन तुल्यं
क्रिया चेद्वतिरिति वतिप्रत्ययो द्रष्टव्यः। आक्रष्टुमा-
हर्तुं यतध्वम् उद्युक्ता यूयं भवत॥ ५९॥

न च गत्यन्तरमस्तीत्याह

उभे इति। उभयोः शम्भो र्मम च आहितं निषिक्तं
वोढ़ुं वीजं तेजः सोढ़ुं सा उमा वा शम्भोरष्टमूर्त्तेः

तस्यात्माशितिकण्ठस्य सैनापत्यमुपेत्य वः ।
मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ६१

इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ॥
मनस्याहितकर्त्तव्यास्तेऽपि देवा दिवं ययुः ६२

तस्य यूयं तदीया जलमयी मूर्त्तिर्वा मम । उभे एव क्षमे न तृतीयेत्यर्थः । वाशब्दो द्वन्द्वार्थे नत्वन्यार्थे । एतदेवोदाहृत्य इत्थमेव व्याख्यातं गणव्याख्याने । अत्र दीपकालङ्कारः प्राकरणिकयोरुमामहेश्वरयोरप्राकरणिकयोर्ब्रह्मजलमूर्त्योश्च औपम्यस्य गम्यतात् तथाह भोजराजः । प्रस्तुतानामप्रस्तुतानाञ्चौपम्यस्य गम्यत्वे दीपकमिति । न चेयं तुल्ययोगिता तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतत्वेन चोत्थानादिति ॥ ६० ॥

तस्येति । तस्य शितिकण्ठस्याष्टमूर्त्तेः आत्मा पुत्र इत्यर्थः । आत्मा वै पुत्रनामासीति श्रुतेः । वो युष्माकं सेनापतेर्भावः सैनापत्यम् । पत्यन्तपुरोहितादिभ्यो यगिति यक् प्रत्ययः । उपेत्य प्राप्य वीर्यस्य विभूतिभिः शौर्यस्य सम्पत्तिभिः सुरबन्दीनां वेणी मोक्ष्यते विस्रंसयिष्यति तारकासुरं हनिष्यतीति भावः ॥ ६१ ॥

इतीति । विश्वस्य योनिः कारणम् । योनिः स्त्रीणां स्थानभेदे कारणे ताम्रिके पणे इति वैजयन्ती

तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः ।
मनसा कार्यसंसिद्धित्वराद्विगुणरंहसा ॥ ६३ ॥

अथ सललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।

विबुधान् सुरान् इति व्याहृत्य अभिधाय तिरोदधे अन्तर्हितवान् । ते देवा अपि मनसि आहितं कर्त्तव्यं यैस्ते तथोक्ताः दिवं स्वर्गं ययुः प्रापुः ॥ ६२ ॥

तत्रेति । पाको नाम कश्चिदसुरः तस्य शासन इन्द्रः तत्र हरचित्ताकर्षणकृत्ये कन्दर्पं निश्चित्य साधु कल्पेनेति शेषः ॥ कार्यस्य संसिद्धौ त्वरया औत्सुक्येन द्वौ गुणौ यस्य तद्द्विगुणं द्विरावृत्तं रंहो वेगो यस्य तेन तथोक्तेन । गुणस्तु वृत्तिशब्दादिज्येन्द्रियमुख्यजन्तुष्विति वैजयन्ती । मनसा अगमत् सस्मारेत्यर्थः गमेर्लुङ् च्लेरङादेशः ॥ ६३ ॥

अथेति । अथ स्मरणानन्तरं स स्मृत इत्यर्थः । पुष्पं धनुर्यस्य स पुष्पधन्वा कामः । वा संज्ञायाम् इत्यनङ् । ललितं त्रिषु सुन्दरमित्यमरः । ललितायाः सुन्दर्य्या योषितः भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत्तथोक्तं चापम् । रतिः स्मरप्रियारतिः स्मरप्रियायामित्यमरः । तस्याः वलयपदानि कङ्कणस्थानानि अङ्कश्चिन्हं यस्य स तथोक्ते कण्ठे आसज्य

सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥६४॥
इतिश्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये ब्रह्माभिगमनोनाम द्वितीयःसर्गः॥

लगयित्वा । चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेः त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते । सहचरस्य सख्युर्मधोर्वसन्तस्य हस्ते न्यस्तं चूताङ्कुर एव अस्त्रं यस्य स तथोक्तः । प्राञ्जलिः कृताञ्जलिः सन् शतमखमिन्द्रमुपतस्थे सङ्गतवान् । सङ्गतिकरणार्थादात्मनेपदम् । अत्र स्वभावोक्तिः स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनमिति । मालिनीवृत्तमेतत् । न न म यय युतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥६४॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां द्वितीयः सर्गः ।

---

## तृतीयः सर्गः ।

---

तस्मिन् मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥१॥

तस्मिन्निति । मघोनः इन्द्रस्य अक्ष्णां सहस्रं त्रिरावृत्ता दश परिमाणमेषामिति त्रिदशान् देवान् । संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये इति बहुव्रीहिः । बहुव्रीहौ संख्येये इति डच्प्रत्ययः । उक्तार्थत्वात् सुचो निवृत्तिः । विहाय त्यक्त्वा तस्मिन् कामे युगपत्पपात । सहस्रेणाक्षिभिरद्राक्षीदित्यादरातिशयोक्तिः । ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन् पक्षपात इत्याशङ्क्यार्थान्तरं न्यस्यति । प्रायो भूम्ना प्रभूणामाश्रितेषु सेवकेषु विषये गौरवमादरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना चलं चञ्चलम् फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भावः ॥१॥

स वासवेनासनसन्निकृष्ट-
मितो निषीदेति विसृष्टभूमिः ।
भर्त्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना
वक्तुं मिथः प्राक्रमतैवमेनम् ॥२॥

आज्ञापय ज्ञातविशेष पुंसां
लोकेषु यत्ते करणीयमस्ति ।

स इति। स कामो वासवेनेन्द्रेण आसनस्य सिंहासनस्य सन्निकृष्टं सन्निहितम् आसनसन्निकृष्टं यथा तथा। शेषषष्ठ्यायं समासः। कृद्योगलक्षणया तु न लोकाव्ययनिष्ठाखलर्थतृणामिति षष्ठीनिषेधात्। इतो निषीद इह उपविशेति विसृष्टभूमिः दत्ताव-काशः सन् भर्त्तुः स्वामिनः प्रसादमनुग्रहं मूर्ध्ना प्रति-नन्द्य सम्भाव्य मिथो रहसि। मिथोऽन्योन्यं रहस्य-पीत्यमरः। एनमिन्द्रम् एवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमत उपक्रान्तवान्। प्रोपाभ्यां समर्थाभ्याम् इत्यात्मनेपदम् ॥२॥

आज्ञापयेति। हे पुंसां ज्ञातविशेष ज्ञातसार। ज्ञाः पुंविशेषार्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। आज्ञापय तदिति शेषः। उत्तरवाक्ये यच्छब्दप्रयो-गाच्च पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः। किन्तदि-

अनुग्रहं संस्मरणप्रवृत्त-
मिच्छामि संवर्द्धितमाज्ञया ते ॥३॥
केनाभ्यसूया पदकाङ्क्षिणा ते
नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य
मत्कार्मुकस्यास्य निदेशवर्त्ती ॥४॥

त्याह लोकेषु ते तव यत् करणीयं कर्त्तव्यमस्ति । संस्म-रणेन प्रवृत्तमुत्पन्नं ते तव अनुग्रहं प्रसादमाज्ञया नियोगेन संवर्धितं वृद्धिं गमितं इच्छामि संस्मरण-कृतमनुग्रहं केचिन्नियोगेन वर्द्धय कचित्कर्मणि नि-युङ्क्ष्वेत्यर्थः अन्यथा मे नास्ति परितोष इति भावः । तमुन्नन्तपाठे णिजर्थं यत्नः कार्यः ॥३॥

न च मे किञ्चिदसाध्यमस्तीत्याह ।

केनेति । पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा नितान्तदीर्घैरतिप्रभूतैस्तपोभिः ते तव अभ्य-सूया ईर्ष्या जनिता तं ब्रूहीति शेषः । किमर्थं याव-द्यतः स भवद्वैरी आहितसायकस्य संहितवाणस्य अस्य मत्कार्मुकस्य निदेशे वर्त्तते इति निदेशवर्त्ती आज्ञावशो भवति अविलम्बेनैव भविष्यतीत्यर्थः । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् ॥४॥

असम्मतः कस्तव मुक्तिमार्गं
पुनर्भवक्लेशभयात् प्रपन्नः।
बद्धश्चिरं तिष्ठतु सुन्दरीणा-
मारेचितभ्रूचतुरैः कटाक्षैः ॥५॥
अध्यापितस्योशनसापि नीतिं
प्रयुक्तरागप्रणिधिर्द्विषस्ते।

सम्प्रति चतुर्वर्गं मोक्षमधिकृत्याह

असम्मत इति। तव असम्मतः कः पुनर्भवः पुनरुत्पत्तिः संसार इति यावत् तत्र ये क्लेशा जन्मजरामरणादयस्तेभ्यो भयात् मुक्तिमार्गं प्रपन्नः तं वद। यतः सोऽपि आरेचिताभिः एकैकशो विवर्त्तिताभिर्भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैः बद्धश्चिरं तिष्ठतु आरेचितलक्षणन्तु। स्याद्भ्रुवोर्ललिताक्षेपादेकस्याएव रेचितम्। तयो र्भूलसमुत्क्षेपं कौटिल्याद्भ्रुकुटिं विदुरिति ॥५॥

धर्मार्थावधिकृत्याह

अध्यापितस्येति। उशनसा शुक्रेण नीतिं नीतिशास्त्रम् अध्यापितस्यापि। अपिशब्दाच्छक्यशिष्याणामप्रधृष्यत्वं गम्यते। गतिबुद्धीत्यादिना द्विकर्म्मकादिङ् धातो र्णिजन्तात्प्रधाने कर्म्मणि क्तः अप्रधाने

कस्यार्थधर्मौ वद पीड़यामि
सिन्धोस्तटावोघ इव प्रवृद्धः ॥६॥
कामेकपत्नीव्रतदुःखशीलां
लोलं मनश्चारुतया प्रविष्टाम् ।
नितम्बिनीमिच्छसि मुक्तलज्जां
कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥७॥

इहादीनां णप्रन्ते कर्तुश्च कर्म्मण इति वचनात् । ते द्विषः तव शत्रोः कस्य अर्थधर्म्मौ प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधि दूतो येन सोऽहम् । प्रणिधिः प्रार्थने चर इति यादवः । प्रवृद्ध ओघः प्रवाहः सिन्धो र्नद्यास्तटाविव पीड़यामि वद ॥६॥

काममधिकृत्याह

कामिति । एकः पति र्यस्याः सा एकपत्नी पतिव्रता । नित्यं सपत्न्यादिष्विति ङीप् । तस्या व्रतं पातिव्रतंत्र तेन दुःखशीलां दुःखस्वभावां दृढ़व्रतामित्यर्थः । शीलं स्वभावे सद्वृत्त इत्यमरः । चारुतया सुन्दरीत्वेन हेतुना लोलं मनस्त्वच्चित्तं प्रविष्टां कां नितम्बिनीं नारीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुं स्वयं गृह्णातीति स्वयग्राहा । विभाषां ग्रह इति णप्रत्ययः । नच जलचरएव ग्राहइति नियमः

कयासि कामिन् सुरतापराधात्
पादानतः कोपनयावधूतः।
तस्याः करिष्यामि दृढ़ानुतापं
प्रवालशय्याशरणं शरीरम् ॥८॥
प्रसीद विश्राम्यतु वीर वज्रं
शरैः मदीयैः कतमः सुरारिः।

जलचरे ग्राह एवेति नियमादिति। स्वयं ग्राहा च सा निषक्तबाहुश्च तां तथाभूताम् इच्छसि। त्वदर्थं पतिव्रतामपि व्रताद् भ्रंशयिष्यामीत्यर्थः। एतच्चेन्द्रस्य पारदारिकत्वादुक्तम्। तथा च श्रुतिः। अहल्यायै जार इति ॥७॥

त्रिविधा नायिका स्वीया परकीया साधारणी चेति तत्र परकीयां प्रस्तुत्योक्तम् इतरे प्रत्याह।

कयेति। हे कामिन् कामुक सुरतापराधात् अन्यासङ्गादित्यर्थः। पादानतः प्रणतः सन् कोपनया कोपनशीलया कया स्त्रिया अवधूतस्तिरस्कृतोऽसि। तस्याः शरीरं दृढ़ानुतापं गाढ़पश्चात्तापम् अतएव प्रवालशय्याशरणं करिष्यामीति ॥८॥

प्रसीदेति। हे वीर प्रसीद प्रसन्नो भव वज्रं कुलिशं विश्राम्यतु उदास्तामित्यर्थः। मदीयैः शरैः मोघीकृतबाहुवीर्य्यो विफलीकृतभुजशक्तिः कतमः

बिभेतु मोघीकृतबाहुवीर्य्यः
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः॥९॥

तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा।
कुर्य्यां हरस्यापि पिनाकपाणे
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये॥१०॥

दैत्यदानवादिषु यः कश्चन सुरारिः। वा बहूनां जातिपरिप्रश्ने डतमच् इति डतमच् प्रत्ययः। कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु किमु वक्तव्यं पुंभ्य इत्यर्थः सकृद्भीतः सर्व्वदा। बिभेतीति भावः भीत्रार्थानां भयहेतुरित्यपादानत्वात् पञ्चमी॥९॥

तवेति। किं बहुना तव प्रसादादनुग्रहात् कुसुमायुधोऽपि अतिदुर्ब्बलास्त्रोऽप्यहम् एकं मधुं वसन्तमेव सहायं लब्ध्वा पिनाकः पाणौ यस्य स पिनाकपाणिः। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ। तस्य हरस्यापि हरः पिनाकी चेत्यतिदारुण इति भावः। धैर्य्यच्युतिं धैर्य्यहानिं कुर्य्यां कर्त्तुं शक्नु-यामित्यर्थः। शकि लिङ्चेति शक्यार्थे लिङ्। अन्ये धन्विनो धनुर्भृतः मम के न केऽपीत्यर्थः। किंशब्दः कुत्सायाम्। कुत्साप्रश्नवितर्केषु किंशब्द इष्यत-इति शाश्वतः॥१०॥

अथोरुदेशादवतार्य्य पाद-
माक्रान्तिसम्भावितपादपीठम्।
सङ्कल्पितार्थे विवृतात्मशक्ति-
माखण्डल: काममिदं बभाषे ॥११॥

सर्व्वं सखे त्वय्युपपन्नमेत-
दुभे ममास्त्रे कुलिशं भवांश्च।
वज्रं तपोवीर्य्यमहत्सु कुण्ठं
त्वं सर्व्वतोगामि च साधकञ्च ॥१२॥

अथेति। अथ स्मरवाक्यश्रवणानन्तरम् आखण्डल: सहस्राक्ष: ऊरुदेशात्पादम् आक्रान्त्या आक्रमणेन सम्भावितं पादपीठं यस्मिन् तद्यथा तथा अवतार्य्य सङ्कल्पितार्थे हरचित्ताकर्षणरूपे विषये विवृतात्मशक्तिं कुर्य्यां हरस्यापीत्यादिना प्रकटीकृतस्वसामर्थ्यं कामं स्मरमिदं वक्ष्यमाणं बभाषे ॥११॥

सर्व्वमिति। हे सखे सखे इति सम्बोधनं गौरवार्थं सर्व्वम् एतत् त्वय्युपपन्नं सिद्धं मम कुलिशं वज्रं भवांश्च उभे अस्त्रे तत्र वज्रं तपोवीर्य्येण तपोबलेन महत्सु प्रबलेषु कुण्ठं प्रतिबद्धप्रसरं त्वमस्त्रं सर्व्वतोगामि च साधकञ्च तापसेष्वप्यकुण्ठमित्यर्थ: ॥१२॥

अवैमीति। हे सखे ते सारं बलम् अवैमि वेद्मि अत: खलु अतएव आत्मसमं मत्तुल्यं त्वां गुरुणि

अवैमि ते सारमतः खलु त्वां
कार्य्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ॥१३॥
आशंसता बाणगतिं वृषाङ्के
कार्य्यं त्वया नः प्रतिपन्नकल्पम् ।

महति कार्य्ये तस्मै हिमाद्रेरिति वक्ष्यमाणे नियोक्ष्ये । स्वराद्यन्तोपसृष्टादितिवक्तव्यमिति वार्त्तिकादात्मनेपदनियमः । तथाहि सारपरीक्षापूर्व्वक एव सर्व्वत्र नियोग इत्याह कृष्णेन विष्णुना । धरतीति धरः पचाद्यच् । भुवो धरः भूधरः तस्य भावस्तत्तां भूधरणशक्तिमित्यर्थः । अवेक्ष्य ज्ञात्वा शेषः सर्पराजः देहोद्वहनाय स्वदेहमुद्वोढुम् । क्रियार्थोपपदस्येत्यादिना चतुर्थी । व्यादिश्यते नियुज्यते । शेषशायी हि भगवान् ॥१३॥

नियोगाङ्गीकारं सिद्धवत्कृत्याह

आशंसतेति । वृषाङ्के हरे बाणगतिं बाणप्रसरमाशंसता कथयता कुर्य्यां हरस्यापि पिनाकपाणेरित्यादिनेति शेषः त्वया नोऽस्माकं कार्य्यं प्रतिपन्नकल्पम् अङ्गीकृतप्रायम् । ईषदसमाप्तौ कल्पप्प्रत्ययः । कथमेतदत आह । इदानीमुच्चैरुन्नता

निबोध यज्ञांशभुजामिदानी-
मुच्चैर्द्विषामीप्सितमेतदेव ॥१४॥
अमी हि वीर्यप्रभवं भवस्य
जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो
ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥१५॥

द्विषो येषां तेषाम् उच्चैर्द्विषां यज्ञांशभुजां देवानाम् । एतेन द्विषस्तु प्रयज्ञभागत्वं सूच्यते । ईप्सितमाप्तुमिष्टम् एतदेव हरे बाणप्रयोगरूपमेव निबोध हरायत्तं बुध्यस्वेत्यर्थः । बुध बोधने इति धातो र्लोट् । अत्राशंसता प्रार्थयमानेनेति नाथव्याख्यानमनाथव्याख्यानम् आङ्पूर्व्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात् । याच्ञार्थत्वस्याप्रामाणिकत्वात् । कुर्य्यां हरस्यापीत्यत्रानयोरभावादयोगाच्चेति ॥१४॥

किन्तत्कार्य्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षेत्यत्राह ।

अमी इति । हि यस्मात् अमी देवाः जयाय शत्रुजयार्थं भवस्य हरस्य वीर्य्यप्रभवं तेजःसम्भूतं सेनान्यं सेनापतिमुशन्ति कामयन्ते वश कान्ताविति धातो र्लट् । ब्रह्मणां सद्योजातादिमन्त्राणाम् अ-

तस्मै हिमाद्रेः प्रयतां तनूजां
यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्य्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम् ॥१६॥

ज्ञानां हृदयादिमन्त्राणां भूः स्थानं ब्रह्माङ्गभूः कृतमन्त्रन्यास इत्यर्थः । ब्रह्मणि निजतत्त्वे । वेदस्तत्त्वं तपो ब्रह्म इत्युभयत्राप्यमरः । योजितात्मा नियमितचित्तः मन्त्रन्यासपूर्व्वकं ब्रह्म ध्यायन्नित्यर्थः । स भवस्य त्वदेकेषोस्तवैकवाणस्य निपातेन साध्यः अनन्यसाध्योऽयमस्मिन्नवसर इति भावः ॥ १५ ॥

तस्मा इति । यतात्मने नियतचित्ताय तस्मै भवाय । रुच्यर्थानांप्रीयमाण इति सम्प्रदानत्वाच्चतुर्थी । प्रयतां हिमाद्रेस्तनूजां पार्व्वतीं रोचयितुं यतस्व । भवितव्यञ्चात्र पार्व्वत्यैवेत्याह योषित्सुस्त्रीषु मध्ये । यतश्च निर्द्धारणमिति सप्तमी । क्षमा शक्ता तस्य हरस्य वीर्य्यं रेतस्तस्य निषेकः क्षरणं तस्य भूमिः चेत् सा पार्व्वत्येव इति आत्मभुवा ब्रह्मणा उपदिष्टम् उभे एव क्षमे वोढुमित्यादिनोक्तमित्यर्थः ॥ १६ ॥

सापीदानीं सन्निकृष्टैव तस्य त्वयाह

गुरोरिति । नगेन्द्रकन्या पार्व्वतीं च गुरोः पितुः

गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम्॥
अन्वास्त इत्यप्सरसां मुखेभ्यः
श्रुतं मया मत्प्रणिधिः स वर्गः॥१७॥
तद्गच्छ सिद्ध्यै कुरु देवकार्य-
मर्थोऽयमर्थान्तरभाव्य एव।

नियोगाच्छासनात् अधित्यकायां हिमाद्रेरूर्ध्वभूमौ। भूमिरूर्द्ध्वमधित्यकेत्यमरः। उपाधिभ्यां त्यकन्नास-न्नारूढयोरिति त्यकन्प्रत्ययः। तपस्यन्तं तपश्चर-न्तम्। कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ्-प्रत्ययः ततः शतृप्रत्ययः। स्थाणुं रुद्रमन्वास्त उपा-स्त इत्यर्थः। इति इदं मया अप्सरसां मुखेभ्यः श्रुतं न चैतदैतिह्यमात्रमित्याह स वर्गः सोऽप्सरसाङ्गणः मत्प्रणिधिः मम गूढ़चरः। प्रणिधिः प्रार्थने चर इति यादवः॥१७॥

तदिति। तत्तस्मात् सिद्ध्यै कार्य्यसिद्ध्यर्थं गच्छ देवकार्य्यं कुरु। आशिषि लोट्। अयमर्थः प्रयो-जनम् अर्थान्तरभाव्यः कारणान्तरसाध्य एव। तच्च कारणान्तरं पार्व्वतीसन्निधानमिति भावः। अर्थः प्रकारे विषये वित्तकारणवस्तुषु। अभिधेये च श-ब्दानां वृत्तौ चापि प्रयोजने इति विश्वः। तथापि

अपेक्षते प्रत्ययमुत्तमं त्वां
बीजाङ्कुरः प्रागुदयादिवाम्भः ॥१८॥
तस्मिन् सुराणां विजयाभ्युपाये
तवैव नामास्त्रगतिः कृती त्वम्।
अप्यप्रसिद्धं यशसे हि पुंसा-
मनन्यसाधारणमेव कर्म्म ॥ १९ ॥
सुराः समभ्यर्थयितार एते
कार्यं त्रयानामपि विष्टपानाम्।

बीजसाध्योऽङ्कुरः बीजाङ्कुरः उदयादुत्पत्तेः प्राक् अम्भ इव त्वामुत्तमं कारणम् अपेक्षते। प्रत्ययोऽधीनशपथ ज्ञानविश्वासहेतुष्वितरमरः। तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थ इति भावः ॥१८॥

तस्मिन्निति। सुराणां विजयाभ्युपाये जयसत्रोपायभूते तस्मिन् हरे अस्त्रगतिः अस्त्रप्रसरः तवैव नाम। नामेति सम्भावनायाम्। अन्येषान्तु सम्भावनापि नास्तीति भावः। अतस्त्वं कृती कृतमस्त्रास्तीति कृती कृतार्थः। तथाहि अप्रसिद्धमप्यनन्यसाधारणमेव कर्म्म पुंसां यशसे हि इदन्तु प्रसिद्धमसाधारणञ्चेति अतियशस्करमिति भावः ॥ १९ ॥

प्रोत्साहनार्थं स्तौति

सुरा इति। एते सुराः समभ्यर्थयितारः याचि-

चापेन ते कर्म न चातिहिंस्र-
महोवतासि स्पृहणीयवीर्यः ॥ २० ॥
मधुश्च ते मन्मथ साहचर्या-
दसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति
व्यादिश्यते केन हुताशनस्य ॥ २१ ॥

तारः कार्यं प्रयोजनं त्रयाणां पिष्टपानामपि सम्बन्धि सर्व्वलोकार्थमितार्थः । कर्म्म ते तव चापेन न तु अन्येनेति भावः । अतिहिंस्रमतिघातुकञ्च न । अहोवतेति सम्बोधने । अहोवतानुकम्पायां खेदे सम्बोधनेऽपि चेति वतामन्त्रणे सन्तोषे चेति वतामन्त्रणास न्तोषखेदानुक्रोशविस्मय इति विश्वः । स्पृहणीयवीर्य्योऽसि आश्चर्य्यविक्रमोऽसि । आश्चर्यं स्पृहणीयञ्चेति नानार्थकोषः ॥ २० ॥

मधुश्चेति । हे मन्मथ असौ मधुश्च वसन्तोऽपि ते साहचर्य्यात् सहचरत्वादेव अनुक्तोऽपि अप्रेरितोऽपि सहायः सहकार्य्येव । तथाहि समीरणो वायुर्हुताशनस्याग्नेः नोदयिता प्रेरको भवेति केन व्यादिश्यते । अत्र मधुसमीरणयोरुक्तिमन्तरेण सहायताकारणं सामान्यधर्म्मः स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथक् निर्द्दिष्ट इति प्रतिवस्तूपमालङ्कारो-

तथेति शेषामिव भर्त्तुराज्ञा
मादाय मूर्ध्ना मदनः प्रतस्थे।
ऐरावतास्फालनकर्कशेन
हस्तेनपस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥
स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः।

ऽयम्। तदुक्तं। यत्र सामान्यनिर्द्देशः पृथग्वाक्यद्वये यदि। गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मतेति ॥ २१ ॥

तथेति। तथास्त्विति भर्तुः स्वामिनः शेषामिव प्रसाददत्तां मालामिव। प्रसादान्निजनिर्म्माल्यदाने शेषेति कीर्त्तितेति विश्वः। माल्याचतादिदाने स्त्री शेषेति वैजयन्तीकेशवौ। आज्ञां मूर्ध्ना आदाय शिरसा गृहीत्वा मदनः प्रतस्थे। समवप्रविभ्यः स्थः इत्यात्मनेपदम्। इन्द्रः ऐरावतास्फालनेन प्रोत्साहनार्थेन ताड़नेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श हस्तस्पर्शेन सम्भावयामासेत्यर्थः। शेषामिवाज्ञामित्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयोः सन्देहसङ्कर इति। यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्युपमा। अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता। शेषादानन्तु सन्दिग्धमिति ॥२२

अङ्गव्ययप्रार्थितकार्य्यसिद्धिः
स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥
तस्मिन् वने संयमिनां मुनीनां
तपः समाधेः प्रतिकूलवर्त्ती ।
सङ्कल्पयोनेरभिमानभूत-
मात्मानमाधाय मधुर्जजृम्भे ॥२४॥

स इति। स मदनः अभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च साशङ्कं सङ्कटमापतितमिति सभयमनुप्रयातः सन् तथा अङ्गस्य व्ययेनापि प्रार्थिता कार्य्यसिद्धिर्येन स तथोक्तः शरीरं त्यक्त्वापि सर्व्वथा देवकार्य्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः। हैमवतं हिमवति भवं स्थाणोः रुद्रस्याश्रमं जगाम ॥ २३ ॥

तस्मिन्निति। तस्मिन् वने स्थाण्वाश्रमे संयमिनां समाधिमतां मुनीनां तपः समाधिरेकाग्रतायाः प्रतिकूलं वर्त्तत इति प्रतिकूलवर्त्ती विरोधी मधुर्वसन्तः सङ्कल्पयोनेर्मनोभवस्य अभिमानभूतं गर्वहेतुभूतमित्यर्थः। कार्य्यकारणयोरभेदोपचारः। आत्मानं निजस्वरूपमाधाय सन्निधाप्य जजृम्भे प्रादुर्बभूव वसन्तधर्म्मान् प्रवर्त्तयामासेत्यर्थः ॥ २४ ॥

कुबेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग् दक्षिणा गन्धवहं मुखेन
व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५ ॥

वसन्तधर्म्मानाह

कुबेरेति । उष्णरश्मौ सूर्य्ये साहसिके च नायके समयं दक्षिणायनकालं सङ्गमकालञ्च विलङ्घ्य अकाण्डे व्यतिक्रम्य कुबेरगुप्तां धनपतिपालितां कुत्सितशरीरेण केनचिद्रक्षिताञ्च उदीचीं स्त्रीलिङ्गाच्चिप्तां काञ्चिन्नायिकाञ्च गन्तुं चलितुं सङ्गन्तुञ्च प्रवृत्ते सति दक्षिणा दिक् दाक्षिण्यवती नायिका च मुखेनाग्रभागेन वक्त्रेण च । वहतीति वहः पचाद्यच् । गन्धस्य वहं गन्धवहम् अनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव । दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्य्यवस्तुनोरिति वैजयन्ती । उत्ससर्ज प्रवर्त्तयामास स्वभर्त्तरि समयोल्लङ्घनेन पराङ्गनासङ्गतिप्रवृत्ते सति स्त्रियो दाक्षिण्यादकिञ्चिद्वदाः दुःखान्निश्वसन्तीतिभावः । उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः । अत्रोत्प्रेक्षालङ्कारः । नच समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यं केवलविशेषणसामर्थ्यादेवाप्रस्तुतप्रतीतौ सोक्तिष्ठते अत्र तु

असूत सद्यः कुसुमान्यशोकः
स्कन्धात् प्रभृत्येव सपल्लवानि।
पादेन नापैक्षत सुन्दरीणां
सम्पर्कमाशिञ्जितनूपुरेण ॥२६॥

दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते। नच श्लेष एव प्रकृताप्रकृतविषयः उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात्। तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः स च व्यलीकनिश्वासरूपचेतनधर्मसम्भावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमासादयन् अभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति वाच्यसिद्ध्यङ्गभूत इत्युपरम्यतामः ॥२५॥

असूतेति। अशोको वृक्षविशेषः सद्यः स्कन्धात्प्रकाण्डात्प्रभृत्येव स्कन्धादारभ्येत्यर्थः। भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः। भाष्यस्य मूलात्प्रभृत्यशात् वृक्षांल्लुञ्चन्तीति कार्तिक्याः प्रभृति आग्रहायणी मास इत्यादि। सपल्लवानि कुसुमानि असूत उभयमप्यजीजनदित्यर्थः। आशिञ्जितो नूपुरो यस्य तेन। शिञ्जधातोरकर्मकाद्गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः। सुन्दरीणां पादेन सम्पर्कं ताड़नं नापैक्षत। सनूपुररवेण स्त्रीचरणेनाभिताडनम्। दोहदं यदशोकस्य ततः पुष्पोद्गमो

सद्यः प्रवालोद्गमचारुपत्त्रे
नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥२७॥
वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः ।

भवेदिति । बकुलो मुखशीधुसिक्तः । आलोकितः कुरवकः कुरुते विकाशमालोडितस्तिलक उत्कलिको विभाति ॥२६॥

सद्य इति । मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्त्राणि पत्त्रा यस्य तस्मिन् । पत्त्रं वाहनपक्षयोरित्यमरः । नवं चूतं चूतकुसुमं तदेव बाणः तस्मिन्नवचूतबाणे समाप्तिं नीते सति सद्यः मनोभवस्य धन्विनो नामाक्षराणीव द्विरेफान् भ्रमरान् निवेशयामास निदधौ । अत्र प्रवालपत्त्रे इत्याद्येकदेशविवर्त्तिरूपकं मधोरिषुकारत्वं रूपयत् नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्त्ति-रूपकोत्थापितेयमुत्प्रेक्षा ॥२७॥

वर्णेति । कर्णिकारं कर्णिकारकुसुमम् । अवयवे च प्राण्योषधिवृक्षेभ्यः इत्युत्पन्नस्य तद्धितस्य पुष्पफलमूलेषु बहुलमिति लुक् एवमन्यत्रापि द्रष्टव्यम् ।

प्रायेण सामाग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥२८॥
बालेन्दुवक्राण्यविकाशभावा-
द्बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥२९॥

वर्णप्रकर्षे वर्णोत्कर्षे सत्यपि निर्गन्धतया हेतुना चेतो दुनोति स्म पर्य्यतापयत्। लट् स्मे इति भूतार्थे लट्। तथाहि प्रायेण विश्वसृजो विधातुः प्रवृत्तिः गुणानां सामग्र्यविधौ साकल्यसम्पादनविषये पराङ्मुखी सर्व्वत्रापि वस्तुनि किञ्चिद्वैकल्यं सम्पादयति यथा चन्द्रे कलङ्कः। अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥२८॥

बालेन्द्विति। अविकाशभावान्निर्व्विकाशत्वान्मुकुलभावाद्धेतोः बालेन्दुरिव वक्राणि अतिलोहितान्यतिरक्तानि पलाशानि किंशुकपुष्पाणि। पलाशे किंशुकः पर्ण इत्यमरः। वसन्तेन पुंसा समागतानां सङ्गतानां वनस्थलीनां स्त्रीणां सद्यः सद्योदत्तानि पुराणेष्वतिलौहित्याभावादिति भावः। नखक्षतानीव बभुः। अत्र वसन्तस्य वनस्थलीनाञ्च विशेषण-

लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं प्रकाश्य।
रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलञ्चकार ॥३०॥
मृगाः पियालद्रुममञ्जरीणां
रजःकणै र्विघ्नितदृष्टिपाताः।

साधारणत्वान्नायकव्यवहारप्रतीतेः समासोक्तिस्ताव-
दस्ति। नखक्षतानीवेति जातिस्वरूपोत्प्रेक्षा वक्रत्व-
लौहित्यगुणनिमित्ता जागर्ति। सा च नायकव्यव-
हाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत इत्युभयोरेक-
कालतैव विशेषणसामर्थ्याद‌प्रस्तुतस्य गम्यते समासो-
क्तिरिष्यत इति हि लक्षणम् ॥२९॥

लग्नेति। मधुश्री र्वसन्तलक्ष्मीः लग्नद्विरेफा
एव अञ्जनभक्तयः कज्जलरचनास्ताभिश्चित्रं चित्रवर्णं
तिलकं पुष्पविशेषमेव तिलकं विशेषकं मुखं प्रारम्भः
तस्मिन्नेव मुखे वक्त्रे प्रकाश्य प्रकटय्य बालारुणकोम-
लेन बालार्कसुन्दरेण रागेणारुणिम्ना तेनैव लाक्षा-
रागेण चूतप्रवाल एवौष्ठस्तं चूतप्रवालोष्ठम् अलञ्च-
कार प्रसाधयामास। अत्र रूपकालङ्कारः ॥३०॥

मृगा इति। पियालद्रुमा राजादनवृक्षाः।
राजादनं पियालस्स्यादित्यमरः। तेषां मञ्जर्यः तासां

मदोद्धताः प्रत्यनिलं विचेरु-
र्वनस्थलीर्मर्मरपत्रमोक्षाः ॥३१॥

चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य ॥३२॥

हिमव्यपायाद् विशदाधराणा-
मापाण्डुरीभूतमुखच्छवीनाम्।

रजःकणै विघ्निताः सञ्जातविघ्नाः हरीणां पाताः प्रभा येषान्ते तथोक्ताः मदोद्धताः मृगाः प्रत्यनिलम् अनिलाभिमुखं मर्म्मराः मर्म्मरशब्दवन्तः पत्रमोक्षाः जीर्णपर्णपाताः यासु ताः वनस्थलीर्विचेरुः वनप्रदेशेषु चरन्ति स्म। देशकालाध्वगन्तव्याः कर्म्मसंज्ञाह्यकर्म्मणामिति चरतेः सकर्म्मकत्वम् ॥३१॥

चूतेति। चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः। सुरभावपथ्ये रक्ते कषाय इति केशवः। पुमान् कोकिलः पुंस्कोकिलः पुंग्रहणं प्रागल्भ्यद्योतनार्थम्। मधुरं चुकूजेति यत् तत्कूजनमेव मनस्विनीनां मानविघाते रोषनिरासे दक्षं स्मरस्य वचनं मानं त्यजतेत्याज्ञावचनं जातम्। कोकिलकूजितश्रवणानन्तरं स्मराज्ञया इव मानं जहुरित्यर्थः ॥३२॥

स्वेदोद्गमः किम्पुरुषाङ्गनानां
चक्रे पदं पत्नविशेषकेषु ॥३३॥
तपस्विनः स्थाणुवनौकसस्ता-
माकालिकीं वीक्ष्य मधुप्रवृत्तिम्।
प्रयत्नसंस्तम्भितविक्रियाणां
कथञ्चिदीशा मनसां बभूवुः ॥३४॥

हिमेति। हिमस्य व्यपायात् अपगमात् विशदाः नीरुजाः अधरा ओष्ठाः यासां तासामापाण्डरीभूतमुखच्छवीनां कुङ्कुमपरिहारादिति भावः। किम्पुरुषाङ्गनानां पत्नविशेषकेषु पत्नरचनासु स्वेदोद्गमः पदं चक्रे घर्मोदयात् स्वेदोदयोऽभूदित्यर्थः। विशदाधरत्वं मधूच्छिष्टत्यागादिति भावः। हेमन्तेषु नार्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम् ॥३३॥

तपस्विन इति। स्थाणोर्वनमोको येषां ते तपस्विनः तत्रत्या मुनयः। समानकाल आद्यन्तावस्याः आकालिकीम् अकालभवत्वात् उत्पत्त्यनन्तरविनाशिनीमित्यर्थः। आकालिकडाद्यन्तवचन इति समानकालादिकट्प्रत्ययः प्रकृतेराकाल आदेशश्च निपातः। टिड्ढाणञित्यादिना ङीप् केचिदकालाद्देशाध्याकादित्वाद्भवार्थे ठञित्याहुः। तामाकालिकीं मधुप्रवृत्तिं

तं देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने।
काष्ठागतस्नेहरसानुविद्धं
द्वन्द्वानि भावं क्रियया विवव्रुः ॥३५॥
मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्त्तमानः।

वीच्चत्र प्रयत्नो संस्तम्भितविक्रियाणां निरुद्धविकाराणां मनसां कथञ्चिदीशाः नियन्तारो बभूवुः॥ ३४ ॥

तमिति। आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन् रति द्वितीया यस्य तस्मिन् रतिसहाये मदने तं देशं स्थाण्वाश्रमं प्रपन्ने प्राप्ते सति द्वन्द्वानि स्थावराणि जङ्गमानि च मिथुनानि काष्ठा उत्कर्षः। काष्ठोत्कर्षे स्थितौ दिशीत्यमरः। तां गतो यः स्नेहः दृष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः। प्रेमा ना प्रियता हार्दं प्रेम स्नेह इत्यमरः। स एव रसः तेनानुविद्धं सम्पृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्यभूतया चेष्टया विवव्रुः प्रकटीचक्रुः शृङ्गारचेष्टाः प्रावर्तन्तेत्यर्थः॥ ३५ ॥

तावेष्टा आह मध्वित्यादिभिश्चतुर्भिः।

मध्विति। द्वौ रेफौ वर्णविशेषौ यस्य सः द्विरेफः भ्रमरः उपचारात्तदर्थोऽपि द्विरेफ उच्यते। यथाह

शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः ॥३६॥
ददौ रसात् पङ्कजरेणुगन्धि
गजाय गण्डूषजलं करेणुः ।
अर्द्धोपभुक्तेन बिसेन जायां
सम्भावयामास रथाङ्गनामा ॥३७॥

कैयटः। शब्दधर्मेणार्थस्य व्यपदेशो दृश्यते यथा भ्रमरशब्दस्य द्विरेफत्वात् द्विरेफो भ्रमरः। कुसुममेवैकं साधारणं पात्रं तस्मिन् मधु मकरन्दम्। मधु मद्ये पुष्परसे इति विश्वः। स्वां प्रियां भृङ्गीमनुवर्त्तमानोऽनुसरन् पपौ तत्पीतशेषं पपावित्यर्थः। कृष्णश्चासौ शारः शवलश्च कृष्णशारः कृष्णमृगः। वर्णो वर्णेनेति समासः। स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं मृगीं शृङ्गेण अकण्डूयत कर्षितवान्। कण्ड्वादिभ्यो यगिति यक् ततः कर्त्तरि लङ् ॥ ३६ ॥

ददाविति। रसादतिरागात् करेणुः करिणी। करेणुरिभ्यां स्त्री नेभइत्यमरः। पङ्काज्जायतइति पङ्कजं तस्य रेणुः पङ्कजरेणुः पङ्कजरेणोर्गन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूषजलं मुखान्तस्थं तज्जलं गजाय ददौ। रथाङ्गनामा चक्रवाकः अर्द्धं यथा तथा

गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्त्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुखं किम्पुरुषश्चुचुम्बे ॥३८॥
पर्य्याप्तपुष्पस्तवकस्तनाभ्यः
स्फुरत्प्रवालोष्ठमनोहराभ्यः।

उपभुक्तेन अर्द्धजग्धेन विसेन जायां सम्भावयामास स्वजग्धशेषं ददावित्यर्थः ॥ ३७ ॥

गीतेति। किम्पुरुषः किन्नरः श्रमवारिलेशैः स्वेदोदबिन्दुभिः किञ्चिदीषत्समुच्छ्वासिताः विश्लेषिताः पत्त्रलेखाः यस्य तत् पुष्पाणामासवः मद्यं पुष्पासवः पुष्पोद्भवमद्यमित्यर्थः वसन्ते मधूकसत्र सम्भवात्। पुष्पवासितमिति केचित्। तेनाघूर्णिताभ्यां उद्भ्रान्ताभ्यां नेत्राभ्यां शोभत इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्बे ॥ ३८ ॥

पर्य्याप्तेति। पर्य्याप्ताः समग्राः पुष्पस्तवका एव स्तना यासां ताभ्यः स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति विकल्पात् न ङीप्। स्फुरन्तः प्रवालाः पल्लवा एव ओष्ठास्तैर्मनोहराभ्यः लता एव वध्वस्ताभ्यः सकाशात्तरवोऽपि। लिङ्गादेव पुंस्त्वं गम्यते। विनम्राः शाखा एव भुजास्तैर्बन्धनान्यवापुः ताभिरालि-

लताबधूभ्यस्तरवोऽप्यवापु-
र्विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥
श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥ ४० ॥
लतागृहद्वारगतोऽथ नन्दी
वामप्रकोष्ठार्पितहेमवेत्रः ।

ङ्गिता इत्यर्थः। स्थावराणामपि मदनविकारोऽभूत् किमुतान्येषामिति भावः। एतच्च तरुलतानामपि चेतनत्वादुक्तम्। यथाह मनुः। अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता इति। अत्र रूपकालङ्कारः।
॥ ३९ ॥

श्रुतेति। तस्मिन् क्षणे वसन्ताविर्भावकाले भगवान् हरः श्रुताप्सरोगीतिरपि दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः। प्रसंख्यानपरः आत्मानुसन्धानपरो बभूव। तथा हि आत्मनश्चित्तस्य ईश्वराणां नियन्तॄणां वशिनामित्यर्थः। विहन्यन्ते एभिरिति विघ्ना प्रत्यूहाः। घञर्थे कप्रत्ययः। जातु कदाचिदपि समाधिभेदे समाधिभञ्जने प्रभवः समर्था न भवन्ति ॥४०॥

मुखार्पितैकाङ्गुलिसंज्ञयैव
माचापलायेति गणान् व्यनैषीत्॥४१॥
निष्कम्पवृक्षं निभृतद्विरेफं
मूकाण्डजं शान्तमृगप्रचारम्।
तच्छासनात् काननमेव सर्वं
चित्रार्पितारम्भमिवावतस्थे॥४२॥

लतेति। अथ लतागृहद्वारं गतो वामे प्रकोष्ठे अर्पितहेमवेत्रो धारितहेमदण्डो नन्दी नन्दिकेश्वरः नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वर इति कोषः। मुखे अर्पितायाः सरोषविस्मयस्मितानलोकं निहितायाः एकस्या अङ्गुलेस्तर्जन्याः संज्ञया सूचनयैव। संज्ञा स्यााच्चेतना नाम हस्ताद्यैरर्थसूचनेत्यमरः। गणान् प्रमथान् चापलाय चापलं कर्तुं चतुर्थी। व्यनैषीत् शिक्षितवान्॥४१॥

न केवलं गणा एव विनीताः किन्तु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह। निष्कम्पेति।

निष्कम्पवृक्षमिदमुद्भिज्जोपलक्षणम्। निभृतद्विरेफं निश्चलभृङ्गं स्वेदजोपलक्षणमेतत्। मूकाण्डजं निःशब्दपक्षिसरीसृपादिकम् एतेन अण्डजजातिरुक्ता। शान्तमृगप्रचारं जरायुजोपलक्षणमेतत्। सर्वमेव काननं तच्छासनान्नन्दीश्वराज्ञया

दृष्टिप्रपातं परिहृत्य तस्य
कामः पुरः शुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं
ध्यानास्पदं भूतपतेर्विवेश ॥४३॥
स देवदारुद्रुमवेदिकायां
शार्दूलचर्म्मव्यवधानवत्याम् ।

चित्रार्पितारम्भं चित्रलिखितारम्भमिवावतस्थे। मृगवाद्या जरायुजाः। स्वेदजाः क्रमिदंशाद्याः पक्षिसर्पाद्योऽण्डजाः। उद्भिदस्तरुगुल्माद्या इत्यमरः ॥४२॥

दृष्टीति। कामः प्रयाणे यात्रायां पुरोगतः शुक्रो यस्मिन् देशे तं पुरःशुक्रं देशमिव। प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारनमेव च। अपिकशक्रसमो राजा हतसैन्यो निवर्त्तत इति प्रतिषेधात्। तस्य दृष्टिप्रपातं दृग्विषयं परिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ताः अन्योन्यसंश्लिष्टाः नमेरूणां सुरपुन्नागानां शाखाः यस्य तत्। तिरोधानयोग्यमिति भावः। भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम्। आस्पदं प्रतिष्ठायामिति निपातः। विवेश ॥४३॥

स इति। आसन्नशरीरपातः आसन्नमृत्युः सकामः शार्दूलचर्म्मणा व्यवधानवत्यां व्याघ्रचर्म्मास्तृतायामित्यर्थः। मोचर्म्मी व्याघ्रचर्म्मणीति शाश्वतादिति

आसीनमासन्नशरीरपात-
स्त्रियम्बकं संयमिनं ददर्श ॥४४॥
पर्य्यङ्कबन्धस्थिरपूर्व्वकाय-
मृज्वायतं सन्नमितोभयांसम्।
उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥४५॥

भाव:। देवदारुद्रुमवेदिकायामासीनम् उपविष्टम् संयमिनं समाधिनिष्ठं त्रियम्बकं त्रिनेत्रं ददर्श। त्र्यम्बकमितुप्रक्ते पादपुरणव्यत्यासात् त्रियम्बकमितिपादपूरणार्थोऽयमियङादेशश्छान्दस:। महाकविप्रयोगादभियुक्तैरङ्गीकृत:। केचित्साहसिका: त्रिलोचनमिति पेठु: ॥ ४४ ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति,—

पर्य्यङ्केति। पर्य्यङ्कबन्धेन वीरासनेनस्थिरपूर्व्वकायं निश्चलोत्तराङ्गम् ऋजुरायतश्च ऋज्वायतस्तं सन्नमितावुभावंसौ यस्य तं तथोक्तम्। वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोग इत्युक्तं कैयटेन। उत्तान ऊर्द्धतलो य: पाणिद्वयस्य सन्निवेश: संस्थानं तस्मात् आङ्कमध्ये प्रफुल्लं राजीवं पङ्कजं यस्यतमिव स्थितम्। वीरासने वशिष्ठ:। एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितम्। इतरस्मिन्तथैवोरुं वी-

भुजङ्गमोन्नद्धजटाकलापं
कर्णावसक्तद्विगुणाक्षसूत्रम्।
कण्ठप्रभासङ्गविशेषनीलां
कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥३६॥
किञ्चित्प्रकाशस्तिमितोग्रतारै
र्भ्रूविक्रियायां विरतप्रसङ्गैः।

रासनमुदाहृतमिति। तथा योगसारे। उत्तानिते करतले करमुत्तानितं परम्। आदायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरमिति ॥ ४५ ॥

भुजङ्गमेति। भुजङ्गमेन उन्नद्ध उन्नमय्य नद्धो जटाकलापो येन तं तथोक्तं कर्णावसक्तं कर्णावलम्बीत्यर्थः। अतएव द्विगुणं द्विरावृत्तम् अक्षसूत्रमक्षमाला यस्य तं कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलाम् अतिनीलां ग्रन्थिमतीं बन्धनयुक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानम्॥ ४६ ॥

किञ्चिदिति। किञ्चित्प्रकाशाः ईषत्प्रकाशाः स्तिमिता निश्चला उग्राश्च ताराः कनीनिका येषां तैः। तारकाक्ष्णः कनीनिकेत्यमरः। भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैः अविस्पन्दितपक्ष्ममालैः अचलितपक्ष्मपंक्तिभिः अधःप्रहृता मयूखा येषान्तैः अधोमयूखैर्नेत्रैः त्रिनेत्रत्वाद्बहुवचनं ल-

नेत्रैरविस्पन्दितपक्ष्ममालै-
र्लक्ष्यीकृतघ्राणमधोमयूखैः ॥४७॥
अवृष्टिसंरम्भमिवाम्बुवाह-
मपामिवाधारमनुत्तरङ्गम्।
अन्तश्चराणां मरुतां निरोधा-
न्निवातनिष्कम्पमिवप्रदीपम् ॥४८॥
कपालनेत्रान्तरलब्धमार्गै-
र्ज्योतिःप्ररोहैरुदितैः शिरस्तः।

र्लक्ष्यीकृतघ्राणं नासाग्रनिविष्टदृष्टिमित्यर्थः। करणान्य-वहिष्कृत्य स्थाणुवन्निश्चलात्मकः। आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचन इति योगसारे ॥ ४७ ॥

अवृष्टीति। अन्तश्चरन्तीत्यन्तश्चराः तेषां मरुतां प्राणादीनां निरोधाद्धेतोः अवृष्टिसंरम्भम् अविद्य-मानवर्षसम्भ्रमम् अम्बुवाहमिव स्थितम् एतेन प्राण-निरोधः सूचितः। अनुत्तरङ्गम् अनुद्भूततरङ्गम् अपामाधारं ह्रदमिव स्थितम् एतेन अपाननिरोधः सूचितः। तथा निवाते निर्व्वातदेशे निष्कम्पं निश्चलं प्रदीपमिव स्थितम् एतेन शेषवायुनिरोधः सूचितः। निवातावाश्रया वाताविप्यमरः ॥ ४८ ॥

कपालेति। कपालनेत्रान्तरेण ब्रह्मकरोटि-नेत्रविवरेण लब्धमार्गैः शिरस्तो ब्रह्मरन्ध्रात्। पञ्च-

मृणालसूत्राधिकसौकुमार्य्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥४९॥

मनो नवद्वारनिषिद्धवृत्ति
हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदोविदुस्त-
मात्मानमात्मन्यवलोकयन्तम् ॥५०॥

स्यात्तसिल्। उदितैरङ्कुरैः ज्योतिःप्ररोहैस्तेजो-ऽङ्कुरैः मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्यास्तां बालस्येन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम् ॥ ४९ ॥

मनइति। नवभ्यो द्वारेभ्यो निषिद्धा निवर्त्तिता वृत्तिः सञ्चारो यस्य तत्तथोक्तं समाधिना प्रणिधानेन वश्यं वशङ्गतम्। यत्प्रत्ययः। प्रणिधानं समाधानं समाधिश्च समाश्रय इति हलायुधः। मनः हृदि हृद-याख्ये अधिष्ठाने व्यवस्थाप्य। तथा च वशिष्ठः। यतो-निर्यांति विषयान् यस्मिंश्चैव प्रलीयते। हृदयं तद्वि-जानीयान्मनसः स्थितिकारणमिति। क्षेत्रविदः क्षे-त्रज्ञाः पुरुषाः। यं न क्षरतीत्यक्षरम् अविनाशिनं विदुर्विदन्ति। विदोलटोवेति भर्जुस्। तमात्मानम् आत्मनि स्वस्मिन्नवलोकयन्तं साक्षात्कुर्व्वन्तम् स्वाति रेकेण परमात्मनोऽभावादितिभावः ॥ ५० ॥

स्मरस्तथाभूतमयुग्मनेत्रं
पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत् साध्वससन्नहस्तः
स्रस्तं शरं चापमपि स्वहस्तात् ॥५१॥

निर्व्वाणभूयिष्ठमथास्य वीर्य्यं
सन्धुक्षयन्तीव वपुर्गुणेन ॥
अनुप्रयाता वनदेवताभ्या-
मदृश्यत स्थावरराजकन्या ॥५२॥

अशोकनिर्भर्त्सितपद्मराग-
माकृष्टहेमद्युतिकर्णिकारम् ।

स्मर इति । स्मरः कामः तथाभूतं पूर्व्वोक्तरूपं मनसाप्यधृष्यमयुग्मनेत्रं विषमाक्षम् अदूरात्पश्यन् साध्वसेन सन्नहस्तो विस्रस्तपाणिः सन् स्वहस्तात् स्रस्तं शरं चापमपि चापञ्च नालक्षयत् न विवेद । भीतो मुह्यतीति भावः ॥५१॥

निर्व्वाणेति । अथ निर्व्वाणेन नाशेन भूयिष्ठं निर्व्वाणभूयिष्ठं नष्टप्रायमित्यर्थः अस्य स्मरस्य वीर्य्यं बलं वपुर्गुणेन सौन्दर्य्येण सन्धुक्षयन्तीव पुनरुज्जीवयन्तीव स्थिता वनदेवताभ्यां सखीभूताभ्यामनुप्रयाता अनुगता स्थावरराजकन्या पार्व्वती अदृश्यत दृष्टा ॥५२॥

मुक्ताकलापीकृतसिन्धुवारं
वसन्तपुष्पाभरणं वहन्ती ॥५३॥
आवर्जिता किञ्चिदिव स्तनाभ्यां
वासो वसाना तरुणार्करागम् ।
पर्य्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥५४॥
स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केशरदामकाञ्चीम् ।

तामेवाह चतुर्भिः

अशोकेति । अशोकपुष्पेण निर्भर्त्सिताखिर-स्कृताः पद्मरागा येन तथोक्तम् आकृष्टहेमद्युतीनि आहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिन् त-त्तथोक्तं मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डी-कुसुमानि यस्मिन् तत् । सिन्धुवारेन्द्रसुरसे निर्गुण्डी-न्द्राणिकेपीतयमरः। वसन्तपुष्पाण्येवाभरणंवहन्ती॥५३॥

आवर्जितेति। स्तनाभ्यां किञ्चिदावर्जिता ईष-दानमितवपुः तरुणार्कस्य रागइव रागो यस्य तत् बालार्कारुणमितयर्थः । उपमानपूर्व्वपदो बहुव्री-हिरुत्तरपदलोपश्च वासो वसाना आच्छादयन्ती॥ अतएव पर्य्याप्तपुष्पस्तवकावनम्रा पल्लविनी किसलय-वती सञ्चारिणी लतेव स्थितेति शेषः ॥ ५४ ॥

न्यासीकृतां स्थानविदा स्मरेण
मौर्वीं द्वितीयामिव कार्मुकस्य ॥५५॥
सुगन्धिनिश्वासविवृद्धतृष्णं
बिम्बाधरासन्नचरं द्विरेफम्।
प्रतिक्षणं संभ्रमलोलदृष्टि-
र्लीलारविन्देन निवारयन्ती ॥५६॥
तां वीक्ष्य सर्व्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम्।

स्रस्तामिति। स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृतां निक्षेपीकृताम्। कर्म्मणि प्रभवतीति कार्मुकं धनुः। कर्म्मण उकञ् इत्युकञ्-प्रत्ययः। तस्य द्वितीयां मौर्वीमिव स्थिताम्। अत्र हि न्यस्ता मौर्वी उत्तरत्र हरवैरनिर्यातनाय उपयुज्यत इति भावः। नितम्बात् स्रस्तां चलितां केशरदाम बकुलमाला सैव काञ्ची तां पुनः पुनरवलम्बमाना हस्तेन धारयन्ती ॥ ५५ ॥

सुगन्धीति। सुगन्धिभिर्निश्वासैर्विवृद्धतृष्णं बिम्बतुल्योऽधरो बिम्बाधरः। वृत्तौ मध्यपदलोपः स्यादिति वामनः। तस्यासन्नचरं सन्निकृष्टचरं द्विरेफं भृङ्गं प्रतिक्षणं संभ्रमेण लोलदृष्टिः चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती ॥ ५६ ॥

जितेन्द्रिये शूलिनि पुष्पचापः
स्वकार्य्यसिद्धिं पुनराशशंस ॥५७॥
भविष्यतः पत्युरुमा च शम्भोः
समाससाद प्रतिहारभूमिम्।
योगात् स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥५८॥

तामिति। सर्व्वावयवेष्वनवद्यामगर्ह्याम्। अवद्यपण्येति निपातः। रतेः कामकलत्रस्यापि ह्रीपदं लज्जानिमित्तमादधानां तुरनतामावहन्तीमित्यर्थः। तां पार्व्वतीं वीच्य पुष्पचापः कामः जितेन्द्रिये दुर्ज्जयेऽपीत्यर्थः। शूलिनि शिवे विषये स्वकार्य्यसिद्धिं पुनराशशंस चकमे। पूर्व्वं साध्वससन्नहस्त इत्यादिना कार्य्यसिद्धेरुन्मूलितत्वाभिधानादिह पुनरित्युक्तम्॥ ५७ ॥

भविष्यत इति। उमा च भविष्यतः पत्युः शम्भोः प्रतिहारभूमिं द्वारदेशं समाससाद। स्त्री द्वार्द्वारं प्रतीहार इत्यमरः। स शम्भुश्च अन्तः परमात्मेति संज्ञा यस्य तत् परं मुख्यम्। परं दूरान्यमुख्येष्विति यादवः। ज्योतिर्दृष्ट्वा साक्षात्कृत्य योगात् ध्यानात्। योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः। उपारराम उपारतः। व्याङ्परिभ्योरमः इति परस्मैपदम्॥ ५८ ॥

ततो भुजङ्गाधिपतेः फणाग्रै-
रधः कथञ्चिद्धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः
पर्यङ्कबन्धं निविडं बिभेद ॥५९॥

तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्तुरेनां
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥६०॥

तत इति । ततो भुजङ्गाधिपतेः शेषस्य फणाग्रैः अधः भूमेरधः कथञ्चित् अतियत्नेन धृतो भूमिभागः सोपवेशनभूभागो यस्य सः तथोक्तः । वायुधारणाञ्चितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः । शनैः कृता प्राणानां प्राङ् निरुद्धानां विमुक्तिः पुनः सञ्चारो येन स कृतप्राणविमुक्तिः ईशो निविडं दृढं पर्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥ ५९ ॥

तस्मा इति । अथ नन्दी तस्मै भगवते । क्रियाग्रहणात् चतुर्थी । प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेनोपेतां सेवार्थमागतामित्यर्थः । शैलसुतां शशंस निवेदयामास । भर्तुः स्वामिनो भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशाम् अङ्गीकृतप्रवेशाम् एतां शैलसुतां प्रवेशयामास च ॥ ६० ॥

तस्याः सखीभ्यां प्रणिपातपूर्वं
स्वहस्तलूनः शिशिरात्ययस्य।
व्यकीर्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥६१॥
उमापि नीलालकमध्यशोभि
विस्रंसयन्ती नवकर्णिकारम्।
चकार कर्णच्युतपल्लवेन

मूर्ध्ना प्रणामं वृषभध्वजाय ॥६२॥

तस्या इति। तस्याः पार्व्वत्याः सखीभ्यां पूर्व्वो-क्ताभ्यां स्वहस्तेन लून उपचितः पल्लवभङ्गभिन्नः किस-लयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य सम्बन्धी पुष्पोच्चयः पुष्पप्रकरः। हस्तादाने चेरस्तेय इति वञ्विषयत्वात्कवीनामयं प्रामादिकः प्रयोग इति व-स्लभः। त्र्यम्बकपादमूले प्रणतिपूर्व्वकं व्यकीर्य्यत विक्षिप्तः॥ ६१॥

उमापीति। उमापि नीलालकानां मध्ये शोभत इति तथोक्तम् अलकन्यस्तमित्यर्थः। नवकर्णिकारं विस्रंसयन्ती कर्णाच्च्युतः पल्लवो यस्य तेन मूर्ध्ना वृष-भध्वजाय प्रणामं चकार क्रियाग्रहणात् सम्प्रदान-त्वम्। ६२॥

अनन्यभाजं पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ॥६३॥
कामस्तु वाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः ।

अनन्येति । साकृतप्रणामा देवी भवेन हरेण अन्यां न भजतीत्यनन्यभाजम् । भजोण्विरिति ण्विप्रत्ययः । सर्व्वनाम्नावृत्तिमात्रे पूर्वपदस्य पुंवद्भावः । पतिमाप्नुहीति तथ्यं सत्यमेवाभिहिता उक्ता उत्तरत्र तथैव सम्भवादितिभावः । अभिदधातेर्व्वर्थस्य दुहादित्वादप्रधाने कर्म्मणि क्तः । तथाहि ईश्वरव्याहृतयो महापुरुषोक्तयः कदाचिदपि लोके भुवने । लोकस्तु भुवने जने इत्यमरः । विपरीतं विसंवादिनमर्थम् अभिधेयं न पुष्णन्ति न वोधयन्तीत्यर्थः ॥ ६३ ॥

कामस्त्विति । कामस्तु वाणावसरं प्रतीक्ष्य उमासन्निधानादयमेव वाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गवत् शलभवत् । समौ पतङ्गशलभावित्यमरः । तेन तुल्यं क्रियाचेद्वतिरिति वतिप्रत्ययः । वह्निमुखं विविक्षुः प्रवेष्टुमिच्छुः । विशतेः

उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श ॥६४॥
अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखै-
र्मन्दाकिनी पुष्करवीजमालाम् ॥६५॥
प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च ।

सन्नन्तादुप्रत्ययः । उमायाः समक्षम् उमासमक्षम् । अक्ष्णः समीपम् अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तोऽच्प्रत्ययः । हरे बद्धलक्ष्यः सन् शरासनज्यां मौर्वीं मुहुराममर्श परामृष्टवान् ॥ ६४ ॥

अथोपेति । अथ गौरी तपोऽस्यास्तीति तपस्वी । अस्मायामेधास्रजोविनिरिति विनिप्रत्ययः । तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमतोऽंशुमतः मयूखै र्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां वीजानि तेषां मालां जपमालिकामुपनिन्ये समर्पितवती ॥ ६५ ॥

प्रतिग्रहीतुमिति । त्रिलोचनस्य प्रणयिप्रियत्वात् अर्थिप्रियत्वात् तामक्षमालां प्रतिग्रहीतुं स्वीकर्त्तुम् उपचक्रमे । पुष्पं धनुर्यस्य स पुष्पधन्वा कामस्य ।

सम्मोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥६६॥
हरस्तु किञ्चित् परिलुप्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥६७॥
विवृण्वती शैलसुतापि भाव-
मङ्गैः स्फुरद्बालकदम्बकल्पैः ।

धा संज्ञायाम् इत्यनङादेशः । सम्मोह्यते अनेनेति सम्मोहनं नाम । नामेति प्रसिद्धौ । अमोघं बाणं सायकं धनुषि समधत्त संहितवान् ॥६६॥

हरस्त्विति । हरस्तु हरोऽपि चन्द्रोदयारम्भे अम्बुराशिरिव किञ्चिदीषत्परिलुप्तधैर्यः न तु प्राकृतजनवदत्यन्तलुप्तधैर्य इति भावः । बिम्बफलतुल्यः अधरोष्ठो यस्य तस्मिन् उमामुखे विलोचनानि व्यापारयामास त्रिभिरपि लोचनैः साभिलाषमद्राक्षीदित्यर्थः । एतेन भगवतो रतिभाव उक्तः ॥६७॥

विवृण्वतीति । शैलसुतापि स्फुरद्बालकदम्बकल्पैः विकसत्कोरकनीपसदृशैः पुलकितैरित्यर्थः । ईषदसमाप्तौ कल्पप्प्रत्ययः । अङ्गैर्भावं रत्याख्यं विवृण्वती प्रकाशयन्ती चारुतरेण पर्यस्तविलोचनेन

साचीकृता चारुतरेण तस्थौ
मुखेन पर्य्यस्तविलोचनेन ॥६८॥
अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्व्वशित्वाद्बलवन्निगृह्य।
हेतुं स्वचेतोविकृतेर्दिदृक्षु-
र्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥६९॥
स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यपादम्।

क्रीड़ाविभ्रान्तनेत्रेण मुखेन असाचि साचि सम्पद्य-मानां साचीकृता तिर्य्यक्कृता। तिर्य्यगर्थे साचि तिर इत्यमरः। तस्थौ क्रिया मुखं साचीकृतय स्थिते-त्यर्थः। न केवलं हरस्यैव देव्या अपुरदितो रति-भाव इति भावः ॥६८॥

अथेति। अथ अयुग्मानि नेत्राणि यस्य सोऽयु-ग्मनेत्रः त्रिनेत्रो वशित्वाज्जितेन्द्रियत्वात् इन्द्रिय-क्षोभं पूर्व्वोक्तमिन्द्रियविकारं पुनर्बलवद् दृढं निगृ-ह्य निवार्य्य स्वचेतोविकृतेः स्वचित्तविकारस्य हेतुं कारणं दिदृक्षुः द्रष्टुमिच्छुः दिशामुपान्तेषु दृष्टिं ससर्ज प्रसारयामास ॥६९॥

स इति। स भगवान् दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं नतांसम् आकुञ्चितः सव्यपादो

ददर्श चक्रीकृतचारुचापं
प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥७०॥
तपःपरामर्शविवृद्धमन्यो-
र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीया-
दक्ष्णः कृशानुः किल निष्पपात ॥७१॥
क्रोधं प्रभो संहर संहरेति
यावद्गिरः खे मरुतां चरन्ति ।

वस्य तम् आलीढाख्यस्थानके स्थितमित्यर्थः । चक्री-कृतचारुचापं मण्डलीकृतसौम्यकोदण्डं प्रहर्तुमभ्यु-द्यतमात्मयोनिं मनोभवं ददर्श । आलीढलक्षणमाह यादवः । स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रि-याम् । वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृती । समानौ स्यात्समपदमालीढं पदमग्रतः । दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्यय इति ॥ ७० ॥

तपइति । तपः परामर्शेन तपस आक्रन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयादक्ष्णः स्फुरन् उद्दीप्य-मान उदर्चिरुद्धूतज्वालः कृशानुरग्निः सहसा अत-र्कितमेव । अतर्किते तु सहसेत्यमरः । निष्पपात किल निश्चक्राम खलुः ॥ ७१ ॥

तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ ७२ ॥
तीव्राभिषङ्गप्रभवेण वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं
कृतोपकारेव रतिर्बभूव ॥ ७३ ॥

क्रोधमिति । हे प्रभो स्वामिन् क्रोधं संहर संहर निवर्तय निवर्तय । चापले द्वे भवत इति काव्यमिति वार्त्तिकेन द्वित्वम् । सम्भ्रमेण द्विरुक्तिबाधमिति काशिका । इतेत्थं मरुतां देवानां गिरो वाचः खे व्योम्नि यावच्चरन्ति प्रवर्त्तन्ते तावत् तत्क्षणमेव भवस्य नेत्राज्जन्म यस्य सः भवनेत्रजन्मा । अवजन्मो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः । स वह्निर्मदनं भस्मैवावशेषो यस्य तं भस्मावशेषं चकार ददाहेत्यर्थः ॥ ७२ ॥

तीव्रेति । तीव्राभिषङ्गप्रभवेण अतिदुःसहाभिभवसम्भवेन । अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि चेति वैजयन्ती । इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया करणा रतिर्मदनभार्या मुहूर्त्तम् अज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव

तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य ।
स्त्रीसन्निकर्षं परिहर्तुमिच्छ-
न्नन्तर्दधे भूतपतिः सभूतः ॥७४॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित्॥७५॥

सहसा दुःखोपनिपातान्मूर्च्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिः ॥ ७३ ॥

तमिति । तपस्वी तपोनिष्ठः भूतपतिः शिवः तपसो विघ्नमन्तरायभूतं तं कामम् आशु वज्रोऽशनिः वनस्पतिं वृक्षमिव अवभज्य भङ्क्त्वा स्त्रीसन्निकर्षं स्त्रीसन्निधानं परिहर्तुमिच्छन् तस्यानर्थहेतुत्वादिति भावः । सभूतः सगणः सन्नन्तर्दधे ॥ ७४ ॥

शैलात्मजेति । शैलात्मजा पार्वत्यपि उच्छिरस उन्नतशिरसो महतः पितुरभिलाषं हरो वरोऽस्त्विति मनोरथं ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुना अधिकं जातलज्जा समानजनसमक्षमवमान-

सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।
सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीत् वेगदीर्घीकृताङ्गः ॥७८॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महा-
काव्ये मदनदहनो नाम तृतीयः सर्गः।

स्यातिदुःसहत्वादितिभावः। शून्या निरुत्साहा सती कथञ्चित् कृच्छ्रेण भवनस्याभिमुखी जगाम॥ ७५॥

सपदीति। सपदि अद्रिः हिमवान् रुद्रस्य संरम्भात्कोपात् भीत्या। संरम्भः सम्भ्रमे कोप इति विश्वः। मुकुलिताक्षीं निमीलितनेत्राम्। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् इति षच्प्रत्ययः। षिद्गौरादिभ्यश्चेति ङीष्। अनुकम्पितुमर्हाम् अनुकम्प्याम् ऋहलोर्ण्यदिति ण्यत्प्रत्ययः। दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीं नलीनीं बिभ्रत् सुरगज इव वेगेन रयेण दीर्घीकृताङ्गः आयतीकृतशरीरः सन् पन्थानम्प्रतिगता प्रतिपथा मार्गानुसारिणी गति र्यस्य सः प्रतिपथगतिरासीत् पन्थानमनुसृत्य जगामेत्यर्थः।७६

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरि-विरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां तृतीयः सर्गः।

## चतुर्थः सर्गः ।

---

अथ मोहपरायणा सती
विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता
नववैधव्यमसह्यवेदनम् ॥१॥

मूर्च्छिता रतिरित्युक्तं सम्प्रति तद्वृत्तान्तमेवाह अथेति । अथ अनन्तरं मोहो मूर्च्छा परम् अयनम् आश्रयो यस्याः सा मोहपरायणा मोहैकशरणा सती । परायणमभिप्रेते तत्परे परमाश्रय इति यादवः । विवशा मूढत्वान्निश्चेष्टा कामवधूः रतिः । असह्या दुःसहा वेदना यस्मिन् तत्तथोक्तम् । विधवायाः गतभर्तृकायाः भावः वैधव्यं नवञ्च तत् वैधव्यञ्चेति नववैधव्यम् । नवग्रहणं दुःसहत्वद्योतनार्थम् । प्रतिपादयिष्यता अनुभावयिष्यता क्रियार्थक्रियायां लृट् । विधिना दैवेन । विधि र्विधाने दैवे चेत्यमरः । विबोधिता वैधव्यानुभवफलोऽयं विधिरिति भावः । अस्मिन् सर्गे वियोगिनीवृत्तानि । विषमे ससजा गुरुः समे सभरा लोऽथ गुरु र्वियोगिनीति लक्षणात् ॥१॥

अवधानपरे चकार सा
प्रलयन्तोन्मिषिते विलोचने।
न विवेद तयोरतृप्तयोः
प्रियमत्यन्तविलुप्तदर्शनम् ॥२॥

अयि जीवितनाथ जीवसी-
त्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम् ॥३॥

अवधानेति। सा रतिः प्रलयान्ते मूर्च्छावसाने। प्रलयो नष्टचेष्टतेत्यमरः। उन्मिषिते उन्मीलिते विलोचने अवधानं परं प्रधानं ययोस्ते अवधानपरे दिदृक्षया अवहिते चकार। द्रष्टव्याभावात्तु न विवेदेत्याह नेति प्रियं कामम् अतृप्तयोः तृप्तिं न गतयोः नित्यं दिदृक्षमाणयोरित्यर्थः तयो र्लोचनयोः दर्शनक्रियापेक्षया सम्बन्धे षष्ठी। अत्यन्तं विलुप्तं दर्शनं स्वलोचनयोः करणयो र्यस्य कर्मभूतस्य तम् अत्यन्तविलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती। प्रियनाशापरिज्ञानाद्विह्वलासक्ति इति तात्पर्यार्थः ॥ २ ॥

अयीति। अयीति प्रश्ने। अयि प्रश्नानुनययोरिति विश्वः। अयि जीवितनाथ जीवसि प्राणिषि कच्चिदित्यभिधायोत्थितया तया रत्या पुरोऽग्रे क्षितौ

अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्द्धजा
समदुःखामिव कुर्वती स्थलीम् ॥४॥
उपमानमभूद्विलासिनां
करणं यत्तव कान्तिमत्तया ।

पुरुषस्य आकृतिरिव आकृति र्यस्य तत् पुरुषाकृति केवलमेकं हरकोपानलभस्म दहने दृष्टं न तु पुरुष इति भावः ॥३॥

अथेति । अथ भस्मदर्शनानन्तरं पुनरेव विह्वला विक्लवा वसुधालिङ्गनधूसरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा तथोक्ता । स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति ङीप् । विकीर्णमूर्द्धजा विकीर्णा विक्षिप्ताः मूर्द्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं वनभूमिं समदुःखाम् आत्मन इव तत्रार्थः । जानपदकुण्डगोणस्थले-त्यादिना ङीष् । समदुःखां स्वतुल्यशोकां कुर्व्व-तीव विललाप परिदेवितवती । विलापः परिदेवन-मित्यमरः ॥४॥

उपमानमिति । तव यत्करणं गात्रम् । करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपीत्यमरः । कान्तिमत्तया

तदिदं गतमीदृशीं दशां
न विदीर्यें कठिनाः खलु स्त्रियः ॥५॥
क्व नु मां त्वदधीनजीवितां
विनिकीर्यं क्षणभिन्नसौहृदः ।

सौन्दर्यस्य हेतुना विलासिनां विलसनशीलानाम् । वौ कषलसेत्यादिना घिनुण् प्रत्ययः । उपमीयते येन तदुपमानम् अभूत् तत्कारणमिदमीदृशीं दशामवस्थां गतं भस्मीभूतमित्यर्थः । तथापि न विदीर्ये न विदीर्णा भवामि । कर्त्तरि लट् । तथाहि स्त्रियः कठिनाः खलु कठिनत्वाददिदीर्यमाणत्वमित्यर्थः । कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः । धीरसञ्चारिणी दृष्टि र्गति र्गोवृषभाश्रिता । स्मितदृष्टं तथालापो विलास इति कीर्त्तितः ॥ ५ ॥

क्वेति । हे प्रिय क्षतसेतुबन्धनः भग्नसेतुबन्धः जलसङ्घातः जलौघः नलीनीमिव जलैकायत्तजीवितामिति शेषः । त्वदधीनजीवितां त्वदायत्तप्राणां मां क्व नु विनिकीर्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृदः क्षणत्यक्तसौहार्दः सन् विद्रुतः पलायितोऽसि । सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम् । सुहृदो भावः सौहृदम् । युवादित्वादण्प्रत्ययः । हृदयस्य हृल्लेखयदण्लासेष्विति हृदादेशः अपि हृद्भावात्

नलिनीं क्षतसेतुबन्धनो
जलसङ्घात इवासि विद्रुतः ॥६॥
कृतवानसि विप्रियं न मे
प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं
विलपन्त्यै रतये न दीयते ॥७॥
स्मरसि स्मर मेखलागुणै-
रुत गोत्रस्खलितेषु बन्धनम् ।

न हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च इत्युभयपदवृद्धिः हृच्छब्दस्तत्राभिधाने उभयपदवृद्धिः स्यात् यथा सुहृदो भावः सौहार्द्दमिति तदेवाह वामनः। सौहृददौर्हृदशब्दौ अनणि हृद्भावादिति ॥ ६ ॥

कृतवानिति। हे प्रिय त्वं मे मम विप्रियम् अप्रियं कृतवान् नासि मया च ते तव प्रतिकूलमप्रियं न कृतम् अकारणं निष्कारणमेव परस्परापकार-रूपकारणाभावेऽपीत्यर्थः । क्रियाविशेषणमेतत् । विलपन्त्यै त्वद्दर्शनार्थिन्या अपीतिभावः। रतये किं कथं दर्शनं न दीयते। क्रियाग्रहणाच्चतुर्थी ॥ ७ ॥

विप्रियमाशङ्कते

स्मरसीति। हे स्मर गोत्रस्खलितेषु नामव्यत्या-

श्रुतकेशरदूषितेक्षणा-
न्यवतंसोत्पलताडनानि वा ॥८॥
हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ॥९॥

येषु । गोत्रं नामान्तरचले कृते इति विग्रहः । मेखलागुणैः बन्धनं स्मरसि उत स्मरसि वा । विकल्पे किं किमुत चेत्यमरः । श्रुतकेशरैः कर्णोत्पलकिञ्जल्कैः दूषिते ईक्षणे येषु तानि अवतंसोत्पलताडनानि सधूलिप्रताडनानीत्यर्थः । स्मरति वा अपकारस्मरणादिदं मद्दर्शनमिति भावः ॥ ८ ॥

हृदय इति । हृदये वससीति स्ववाक्यानुवादः । इत्येवं रूपं मत्प्रियं यदवोचः उक्तवानसि । ब्रूञो वुकि वच उम् इत्यमागमः । तत्कैतवमवैमि मिथ्येति ननेव इदं वचनमुपचारपदं परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानं कैतवस्थानमिति यावत् न चेत् त्वमनङ्गः अशरीरः कथं रतिः अक्षता अविनष्टा । आश्रयनाशेऽप्याश्रितमविनष्टमिति अविरोधादितिभावः ॥ ९ ॥

परलोकनवप्रवासिनः
प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चित
स्त्वदधीनं खलु देहिनां सुखम् ॥१०॥
रजनीतिमिरावगुण्ठिते ।
पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रियकामिनां प्रिया
स्त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥

न च मे कश्चिद्विचारः किन्तु लोकः शोच्यत इत्याह ।

परलोकेति । परलोकं प्रति नवप्रवासिनोऽचिरप्रोषितस्य अनेन अनुगमनकालानतिपातः सूच्यते । तव पदवीं मार्गं प्रतिपत्स्ये त्वामनुगमिष्यामीत्यर्थः । अतो मे नास्ति विचार इति भावः । किन्तु विधिना दैवेन एष जनो लोकः वञ्चितः प्रतारितः देहिनां सुखं त्वदधीनं त्वय्यधीनं खलु । अधिशब्दस्य शौण्डादित्वात्सप्तमी शौण्डै रिति समासः । अध्युत्तरपदादिति खप्रत्ययः । एवमन्यत्रापि । सुखप्रदाभावे कुतः सुखमिति भावः ॥ १० ॥

तदेवाह रजनीति । हे प्रिय रजनीतिमिरेणावगुण्ठिते आवृते पुरमार्गे घनशब्दविक्लवाः गर्जितभीताः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते

नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥ १२ ॥
अवगम्य कथीकृतं वपुः
प्रियबन्धोस्तव निष्फलोदयः।
बहुलेऽपि गते निशाकर
स्तनुतां दुःखमनङ्ग मोक्ष्यति ॥ १३ ॥

त्वां विना। अन्यारादितरर्त्ते इत्यादिना पञ्चमी। क ईश्वरग्रक्तः न कश्चिदित्यर्थः। नहि कामान्धानां भीतिरस्तीति भावः ॥ ११ ॥

नयनानीति। अरुणानि नयनानि घूर्णयन् भ्रमयन् तथा पदेपदे प्रतिपदम्। वीप्सायां द्विरुक्तिः। वचनानि स्खलयन् विपर्य्यासयन् प्रमदानां वारुणीमदो मद्यमदः अधुना त्वय्यसति विडम्बना अनुकृतिमात्रम्। मदनाभावे मदस्य निष्फलत्वादिति भावः। तथा च शिशुपालवधे तं मदो दयितसङ्गम भूष इति ॥ १२ ॥

अवगम्येति। हे अनङ्ग अशरीर प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं कथीकृतम् अकथा कथा सम्पद्यमानं कृतं शब्दमात्रावशिष्टम् अवगम्य ज्ञात्वा

हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः ।
वद सम्प्रति कस्य वाणतां
नवचूतप्रसवो गमिष्यति ॥ १४ ॥
अलिपङ्क्तिरनेकशस्त्वया
गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं
गुरुशोकामनुरोदितीव माम् ॥ १५॥

निष्फलोदयः उद्दीप्याभावात् उद्दीपनवैफल्यमिति भावः। निशाकरश्चन्द्रः बहुले कृष्णपक्षे गतेऽपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रात् मोक्ष्यति कथा वृद्धिरिति दुःखायिष्यत इत्यर्थः॥ १३॥

हरितेति। हरितश्च अरुणश्च। वर्णोवर्णेनेति तत्पुरुषः। हरितारुणं चारु बन्धनं वृन्तं पुङ्खश्च यस्य स तथोक्तः। कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितः अनुमापितः चूतचर्वणकार्यत्वात्कलशब्दस्येति भावः। नवचूतप्रसवः नवचूतकुसुमं सम्प्रति कस्य वाणतां शरत्वं गमिष्यति वद। अन्यस्य पुष्पवाणस्याभावादिति भावः॥ १४॥

अलीति। त्वया अनेकशो बहुशः धनुषः कार्मुकस्य गुणकृत्ये मौर्वीकार्ये गुणवत्कर्म्मणि च नि-

प्रतिपद्य मनोहरं वपुः
पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां
मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥
शिरसा प्रणिपत्य याचिता-
न्युपगूढ़ानि सवेपथूनि च ।

योजिता अधिकृता इयम् अलिपङ्क्तिः करुणस्वनैः दीनस्वनैः विरुतैः कूजितैः गुरुशोकां दुर्भरदुःखाम् । गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भर इति शब्दार्णवः । माम् अनुरोदितीव । उपसर्गात्सकर्म्मकत्वम् । रुदादिभ्यः सार्व्वधातुक इति इड़ागम ॥ १५ ॥

प्रतिपद्येति । तावत् पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्य उत्थितः सन् मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रतिदूतिपदेषु सुरतदूतीस्थानेषु आदिश आज्ञापय प्रगल्भानामेव दौत्याधिकार इति भावः । ङीवन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाद्ध्रस्वः । अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेद्गिरमिति केचित् । उणादयोबहुलमिति बहुलग्रहणात् ह्रस्वइति वल्लभः ॥ १६ ॥

शिरसेति । हे स्मर शिरसा प्रणिपत्य याचितानि सवेपथूनि सकम्पानि । द्वितोऽथुच् इति अथु-

सुरतानि च तानि ते रहः
स्मर संस्मृत्य न शान्तिरस्ति मे ॥ १७॥
रचितं रतिपण्डित त्वया
स्वयमङ्गेषु ममेदमार्त्तवम् ।
ध्रियते कुसुमप्रसाधनं
तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥
विबुधैरपि यस्य दारुणै
रसमाप्ते परिकर्म्मणि स्मृतः ।

च्प्रत्ययः । सात्विकान्तरोपलक्षणमेतत् । स्तम्भप्रलय-रोमाञ्चाः स्वेदो वैवर्ण्य वेपथु । अश्रुवै स्वर्यमित्यष्टौ सात्विकाः परिकीर्त्तिता इति । उपगूढ़ानि आलि-ङ्गनानि च ॥ नपुंसके भावेक्तः । तान्यनुभूतप्रका-राणि रहः एकान्ते सुरतानि च संस्मृत्य मे शान्ति र्नास्ति । अत्र समान कर्त्तृत्वं दुर्घटं समानक्रिया-पेक्षास्तीति केचित् ॥ १७ ॥

रचितमिति । हेरतिपण्डित रतिकुशल त्वया मम अङ्गेषु अवयवेषु स्वयं रचितम् ऋतुरस्य प्राप्त-आर्त्तवं वासन्तम् । ऋतोरण इत्यण्प्रत्ययः । कुसुम-प्रसाधनं पुष्पाभरणम् इदं ध्रियते अवतिष्ठते । धृञ् अवस्थान इतिधातो र्मौदादिकात्कर्त्तरि लट् । तव-तत् प्रसाधकं चारु सुन्दरं वपुस्तु न दृश्यते ॥ १८ ॥

तमिमं कुरु दक्षिणेतरं
चरणं निर्मितरागमेहि मे ॥ १९ ॥
अहमेत्य पतङ्गवर्त्मना
पुनरङ्काश्रयिणी भवामि ते ।
चतुरैः सुरकामिनीजनैः
प्रिय यावन्न विलोभ्यसे दिवि ॥२०॥

विबुधैरिति । दारुणैः क्रूरैः प्राणान्तिके कर्म्मणि नियोगादिति भावः । विबुधैः देवैः अनभिज्ञत्वञ्च ध्वन्यते । यस्य मच्चरणस्य परिकर्म्मणि प्रसाधने । परिकर्म्म प्रसाधनमित्यमरः । असमाप्ते सति स्मृतोऽसि तमिमं दक्षिणेतरं वामं मे चरणं निर्म्मितरागं रचितलाक्षारागं कुरु एहि आगच्छत ॥ १९ ॥

अहमिति । अहं पतङ्गवर्त्मना शलभमार्गेण अग्निप्रवेशेनेत्यर्थः । पतङ्गः शलभे चाग्नौ मार्ज्जारेऽर्के शरे खग इति वैजयन्ती । एत्य आगत्य पुनस्ते अङ्काश्रयिणी उत्सङ्गवर्त्तिनी भवामि सम्प्रत्येव भविष्यामि । वर्त्तमानसामीप्ये वर्त्तमान वद्वेति लट् । हे प्रिय दिवि स्वर्गे चतुरैः सुरकामिनीजनैः अप्सरोगणैः यावन्नविलभ्यसे विलोभयिष्यसे । यावत्पुरानिपातयोर्लट् इति लट् ॥ २० ॥

मदनेन विनाकृता रतिः
क्षणमात्रं किलजीवितेति मे।
वचनीयमिदं व्यवस्थितं
रमण त्वामनुयामि यद्यपि ॥२१॥

क्रियतां कथमन्त्यमण्डनं
परलोकान्तरितस्य ते मया।
सममेव गतोऽस्यतर्किततां
गतिमङ्गेन च जीवितेन च ॥ २२ ॥

मदनेति। हे रमण त्वाम् अनुयामि यद्यप्यनुगमिष्यस्येव। वर्त्तमानसामीप्ये वर्त्तमान वद्वेति लट्। यद्यपीत्यवधारण इति केशवः। किन्तु रतिः मदनेन विनाकृता वियोजिता सतीत्यर्थः। सुप् सुपेति समासः। क्षणमात्रं जीविता किलेति इदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत् ॥ २१ ॥

क्रियतामिति। परलोके अन्तरितस्य व्यवहितस्य मृतस्येत्यर्थः। ते तव मया अन्त्यमण्डनं कथं केन प्रकारेण क्रियताम्। क्रियतामित्यत्र कामचारे लोट्। इतदग्धस्य ते यथेच्छ मण्डनमपि न सम्भवतीत्यर्थः। कुतः अङ्गेन च समं सहैव अतर्किताम्। अविचारितां गतिं गतोऽसि। इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः ॥ २२ ॥

ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्गनिषस्सधन्वनः।
मधुना सह सस्मितां कथां
नयनोपान्तविलोकितञ्च यत् ॥२३॥

क्व नु ते हृदयङ्गमः सखा
कुसुमायोजितकार्मुको मधुः।
न खलूग्ररुषा पिनाकिना
गमितः सोऽपि सुहृद्गतां गतिम्॥२४॥

ऋजुतामिति। शरम् ऋजुतामार्ज्जवं नयतः उत्सङ्गे विषस्सम् अङ्कगतं धनुर्यस्य तस्य। धनुषश्च इत्यनङादेशः। ते तव मधुना वसन्तेन सह। मधुर्दैत्ये चैत्रे वसन्ते चेति विश्वः। सस्मितां कथामालापं तथा यन्नयनोपान्तविलोकितम् अपाङ्गवीक्षणं ते इत्यनुषङ्गः। तच्च स्मरामि॥ २३॥

क्व न्विति। हृदयं गच्छतीति हृदयङ्गमः हृद्यः। खच् प्रकरणे गमेः सुपुपसंख्यानमिति खच् प्रत्ययः। अरुर्द्विषदजन्तस्य मुम् इति मुमागमः। ते तव सखा कुसुमैरायोजितमारचितं कार्म्मुकं येन कार्म्मुकनिर्म्माता मधुः वसन्तः क्व नु वा गत इति शेषः। अथवा सोऽपि उग्ररुषा तीव्रकोपेण पिनाकिना ईश्वरेण सुहृदा मदनेन गतां प्राप्तां गतिं भस्मतामितप्रर्थः।

अथ तैः परिदेविताक्षरै
र्हृदये दिग्धशरैरिवाहतः।
रतिमभ्युपपत्तुमातुरां
मधुरात्मानमदर्शयत् पुरः॥ २५॥
तमवेक्ष्य रुरोद सा भृशं
स्तनसम्बाधमुरोजघान च।
स्वजनस्य कि दुःखमग्रतो
विवृतद्वारमिवोपजायते॥ २६॥

न गमितः खलु न प्रापितः किम्। जिज्ञासानुनये खलु इत्यमरः॥ २४॥

अथेति। अथ तैः परि देविताक्षरै विलापवचनैः हृदये दिग्धशरैः विषलिप्तमुखशरैरिवाहतः सन्। विषाक्ते दिग्ध लिप्तकावित्यमरः। मधुः वसन्तः आतुराम् आपन्नां रतिम् अभ्युपपत्तुम् अनुग्रहीतुम् आश्वासयितुमित्यर्थः। अभ्युपपत्तिरनुग्रह इत्यमरः। आत्मानं पुरः अदर्शयत् आविरभूदित्यर्थः॥ २५॥

तमिति। सा रतिः तं मधुम् अवेक्ष्य दृष्ट्वा भृशं रुरोद स्तनौ सम्बाध्य स्तन सम्बाधम्। परिक्लिश्यमाने चेति णमुल्। उरो जघान ताड़ितवती च तथाहि स्वजनस्य अग्रतः दुःखं विवृतम् अपसारितं

इति चैनमुवाच दुःखिता
सुहृदः पश्य वसन्त किं स्थितम्।
तदिदं कणशो विकीर्य्यते
पवनैर्भस्म कपोतकर्व्बुरम॥ २७॥

अयि सम्प्रति देहि दर्शनं
स्मर पर्य्युत्सुक एष माधवः।
दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने॥२८॥

द्वारं कवाटं यस्य तदिव उपजायते आविर्भवति उच्छृ-ङ्खलं प्रवर्त्तत इत्युत्प्रेक्षाभिप्रायः॥ २६॥

इतीति। दुःखमस्या सञ्जातं दुःखिता सञ्जा-तदुःखेत्यर्थः। तारकादित्व दितच्। सा रतिः एनं वसन्तम् इत्युवाच च। चकारः पूर्व्वोक्त समुच्चयार्थः। हे वसन्त पश्य सुहृद स्त्वत्सखस्य किं स्थितं किमुप-स्थितम्। तदिदं कपोतकर्वुरं पारावतशवल कणशश्चूर्णी भूतम्। अल्पार्थाच्छस् प्रत्ययः। भस्म पवनैः विकीर्य्यते विक्षिप्यते पश्य भस्मीभूतस्ते सुहृ-दित्यर्थः॥ २७॥

अयीति। अपि स्मर सम्प्रति दर्शनं देहि एष माधवः वसन्तः पर्य्युत्सुकः त्वद्दर्शनोत्कण्ठितः। त्वा-मप्यनाहृतवतोऽस्य को माधव इत्यासंङ्क्याह। नृणां

अमुना ननु पार्श्ववर्त्तिना
जगदाज्ञां ससुरासुरं तव।
बिसतन्तुगुणस्य कारितं
धनुषः पेलवपुष्पपत्रिणः॥ २९॥
गत एव न ते निवर्त्तते
स सखा दीप इवानिलाहतः।

पुरुषाणां दयितासु प्रेम अनवस्थितम् अस्थिरं चलमित्यर्थः। सुहृज्जने प्रेम तु न चलं खलु॥ २८॥

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह॥ २८॥

अमुनेति। ननु मदनपार्श्ववर्त्तिना सहचरेण अमुना वसन्तेन ससुरासुरं सुरासुर सहितं जगत् बिसतन्तुगुणस्य मृणालसूत्र मौर्वीकस्य पेलवानि कोमलानि पुष्पाण्येव पत्रिणो वाणा यस्य तस्य तव धनुषः आज्ञां कारितं जगताज्ञा कारितेत्यर्थः। हृकोरन्यतरस्यामिति जगतः कर्म्मत्वम्॥ २९॥

गत इति। स ते सखा अनिलाहतः वायुताड़ितः दीप इव गतएव न निवर्त्तते अहमस्य दीपायमानस्य दशा वर्त्तिरिव तिष्ठामीति शेषः। दशावर्त्तीववस्थायां वस्त्रान्तेस्युरदशा अपीति विश्वः। कुतः अविषह्यव्यसनेन सोढुमशक्य दुःखप्रकर्षेण धूमितां

अहमस्य दशेव पश्य मा-
मविषह्यव्यसनेन धूमिताम् ॥ ३० ॥
विधिना कृतमर्द्धवैशसं
ननु मां कामवधे विमुञ्चता ।
अनपायिनि संश्रयद्रुमे
गजभग्ने पतनाय वल्लरी ॥ ३१ ॥

सञ्जातधूमां मां पश्य धूमवत्त्वान्नष्टदीपदशासाम्यं धूमस्य व्यसनमेवेत्यर्थः ॥ ३० ॥

विधिनेति । ननु वसन्त कामवधे मदनवधे मां विमुञ्चता वर्ज्जयता अमारयतेत्यर्थः । विधिना दैवेन विशसति हिनस्तीति विशसो घातुकः पचाद्यच् । विशसस्य कर्म्म वैशसं युवादित्वादण् प्रत्ययः । अर्द्ध-वैशसम् अर्द्धवधः कृतम् । अर्द्धो वा एष आत्मनो यत्पत्नीतिश्रुतेः । पतुः स्वस्य च आश्रयाश्रयिभूतयोरेकपदार्थत्वाभिप्रायेणार्द्धोक्तिः । तथा च एकदेशवधे देशान्तरस्यापि वधनियमनान्मामपि विधिरन्नेव हतवानिति तात्पर्य्यम् । एतदेवोपपादयति अनपायिनि अनपायित्वेन विश्वस्ते संश्रयद्रुमे आश्रयवृक्षे गजभग्ने सति वल्लरी लता पतनाय भवतीति शेषः पतितुमेव सालमित्यर्थः । तुमर्थाच्च भाववचनादिति चतुर्थी ॥ ३१ ॥

तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्ज्जना-
न्ननु मां प्रापय पत्युरन्तिकम् ॥३२॥
शशिना सह याति कौमुदी
सह मेघेन तड़ित् प्रलीयते ।

सम्प्रत्यनन्तरकर्त्तव्यं प्रार्थयते

तदिति । तत्तस्मात्कारणादुक्तप्रकारेण अन्यथापि मरणस्यावश्यम्भावादित्यर्थः । अनन्तरं भवता इदं वच्यमाणं बन्धुजनप्रयोजनं बन्धुकृतं क्रियताम् । प्रार्थनायां लोट् । तदेवोपदिशति ननु वसन्त विधुरां विवशां मां ज्वलनातिसर्ज्जनात् अग्निदानात् पत्युरन्तिकं प्रापय अग्निप्रवेशनं कारयेत्यर्थः ॥३२॥

कर्त्तव्यश्चायमर्थः स्त्रीणामित्याह

शशिनेति । कौमुदी चन्द्रिका शशिना सह याति शशिनि अस्तमिते स्वयं नश्यतीत्यर्थः । तड़ित्सौदामिनी मेघेन सह प्रलीयते प्रणश्यति । कर्त्तरि लट् । प्रमदाः स्त्रियः पतिवर्त्म गच्छन्तीति पतिवर्त्मगाः पतिमार्गानुगामिन्यः इतीत्यतद्विचेतनैरप्यचेतनैरविवेकिभिरपीत्यर्थः । प्रतिपन्नं ज्ञातम् । अलवणा यवागूः अनुदरा कन्येतिवत् अल्प-

प्रमदाः पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि ॥३३॥
अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा
रचयिष्यामि तनुं विभावसौ ॥३४॥
कुसुमास्तरणे सहायतां
बहुशः सौम्य गतस्त्वमावयोः ।

त्वाभिप्रायेण विचेतनैरपीति निर्देशः । नाथस्तु पृथग्जनैरिति पपाठ । पतिवर्त्मगा इतत्र स्मृतिः । आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियते या पत्यौ सा स्त्री ज्ञेया पतिव्रतेति ॥ ३३ ॥

अमुनैवेति । अमुना पुरोवर्त्तिना सुभगेन शोभनेन प्रियगात्रभस्मनैव । एवकारो मण्डनान्तरनिवृत्त्यर्थः । कषायितस्तनी रञ्जितस्तनी । रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रस इति वैजयन्ती । नवपल्लवसंस्तरे यथा नवपल्लवतल्प इव विभावसौ वह्नौ तनुं शरीरं रचयिष्यामि निधास्यामीत्यर्थः ॥ ३४ ॥

कुसुमेति । हे सौम्य साधो त्वम् आवयोः रतिपञ्चबाणयोः बहुशो बहुवारं कुसुमास्तरणे पुष्पशयने सहायतां गतः । सम्प्रति प्रणिपाताञ्जलिना

कुरु सम्प्रति तावदाशु मे
प्रणिपाताञ्जलियाचितश्चिताम् ॥३५॥
तदनु ज्वलनं मदर्पितं
त्वरये दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः
क्षणमप्युत्सहते न मां विना ॥३६॥
इति चापि विधाय दीयतां
सलिलस्याञ्जलिरेक एव नौ ।

याचितः अञ्जलिपूर्व्वकं प्रार्थितः सन्नित्यर्थः । आशु मे चितां काष्ठचयं कुरु कुरुष्व । यथेह तथामुत्रो-पकर्त्तव्यं मित्रेणेत्यर्थः ॥ ३५ ॥

तदिति । तच्चिताकरणमनु अनन्तरं मयार्पितं मदर्पितं ज्वलनमग्निं दक्षिणवातवीजनैः मलयमा-रुतसञ्चालनैः त्वरयेस्त्वरितं ज्वलयेत्यर्थः । त्वराहे-तुमाह ते तव विदितं खलु । मतिबुद्धिपूजार्थेभ्य-श्चेति वर्त्तमाने क्तः । तद्योगात् षष्ठी । यथा येन प्रकारेण स्मरः मां विना क्षणमपि नोत्सहते न हृष्यति तथा त्वया ज्ञातमेवेत्यर्थः ॥ ३६ ॥

इतीति । अपि च इत्येवं विधाय कृत्वा नौ आवाभ्याम् एक एव सलिलस्याञ्जलि दीयताम् । तम-

अविभज्य परत्न तं मया
सहितः पास्यति ते स बान्धवः ॥३७॥

परलोकविधौ च माधव
स्मरमुद्दिश्य विलोलपल्लवाः।
निवपेः सहकारमञ्जरीः
प्रियचूतप्रसवो हि ते सखा ॥३८॥

इति देहविमुक्तये स्थितां
रतिमाकाशभवा सरस्वती।

ञ्जलिं स ते बान्धवः सखा स्मरः परत्न परलोके मया सहितोऽविभज्य पास्यति ॥ ३७ ॥

परलोक इति। किञ्च हे माधव वसन्त परलोकविधौ पिण्डोदकादिकर्म्मणि स्मरमुद्दिश्य विलोलाः पल्लवाः यासु ताः सहकारमञ्जरीः चूतवल्लरीः निवपेः देहि हि यस्मात्कारणात् ते सखा स्मरः प्रियाः चूतप्रसवा यस्य स तथोक्तः ॥ ३८ ॥

इतीति। इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थितां कृतनिश्चयामिति यावत्। रतिम् आकाशभवा सरस्वती अशरीरा वाक् ह्रदशोषविक्लवां ह्रदस्य जलाधारस्य शोषेण विक्लवां शफरीं प्रोष्ठीम्। प्रोष्ठी तु शफरी द्वयोरित्यमरः। प्रथमा दृष्टिं वर्षे-

शफरीं ह्रदशोषविक्लवां
प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ३९॥

कुसुमायुधपत्नि दुर्लभ-
स्तव भर्त्ता न चिराद्भविष्यति ।
शृणु येन स कर्मणा गतः
शलभत्वं हरलोचनार्च्चिषि ॥४०॥

अभिलाषमुदीरितेन्द्रियः
स्वसुतायामकरोत् प्रजापतिः ।

मिव अन्वकम्पयत् अनुकम्पितवती सदयमुवाच तत्रर्थः। कृपा दयानुकम्पा स्यादितत्रमरः ॥ ३९ ॥

कुसुमेति। हे कुसुमायुधपत्नि ते तव भर्त्ता चिरात् चिरं दुर्लभो न भविष्यति किन्त्वचिरमेव सुलभो भविष्यतीतत्रर्थः। किञ्च शृणु तत्कर्म्मेति शेषः। येन कर्म्मणा स ते भर्त्ता हरलोचनस्यार्च्चिः ज्वाला। ज्वालाभासो न पुंस्यर्च्चिरितत्रमरः। तस्मिन् शलभत्वं पतङ्गत्वं गतः। समौ पतङ्गशलभावितत्रमरः ॥ ४० ॥

तदेव कर्म्मोपाचष्टे

अभिलाषमिति। उदीरितेन्द्रियः प्रेरितेन्द्रियः स्मरेणेतिशेषः। प्रजापतिः ब्रह्मा स्वसुतायां सरस्वत्याम् अभिलाषमनुरागमकरोत्। अथ तेन प्रजा-

अथ तेन निगृह्य विक्रिया-
मभिशप्तः फलमेतदन्वभूत् ॥४१॥
परिणेष्यति पार्वतीं यदा
तपसा तत्प्रवणीकृतो हरः।
उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन नियोजयिष्यति ॥४२॥
इति चाह स धर्मयाचितः
स्मरशापावधिदां सरस्वतीम्।

पतिना विक्रियाम् इन्द्रियविकारं निगृह्य निरुध्य अभिशप्तः सन् एतत् फलं दाहात्मकं स्वकर्म्मफलमन्वभूत् ॥ ४१॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन परिणेष्यतीत्यादिना। धर्मेण धर्म्माख्यप्रजापतिना याचितः प्रार्थितः स भगवान् ब्रह्मा तपसा कारणेन तस्यां पार्व्वत्यां प्रवणीकृतः अभिमुखीकृतः हरः शिवः यदा पार्व्वतीं परिणेष्यति उद्वक्ष्यति तदा उपलब्धसुखः प्राप्तानन्दः सन् स्मरं कामं स्वेन वपुषा नियोजयिष्यति सङ्गमयिष्यति इत्येवं स्मरशापस्यावधिदाम् अवसानदायिनीं सरस्वतीं वाचमाह एवं शापावधिमपुत्रकृतवानित्यर्थः। ननु तया क्रुद्धस्य कथमीदृशी

अग्नेरम्भतस्य चोभयो-
र्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥ युग्मकम्

तदिदं परिरक्ष शोभने
भवितव्यप्रियसङ्गमं वपुः ।
रविपीतजला तपात्यये
पुनरोघेन हि युज्यते नदी ॥४४॥

इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।

शान्तिरत आह । वशिनो जितेन्द्रियाश्च अम्बुधराश्च अग्नेरम्भतस्य चेतुरभयो योनयः प्रभवाः । वशिपक्षे अग्न्यम्भतशब्दौ कोपप्रसादपरौ अन्यत्र वैद्युतान्युदकपरौ । युग्मकम् ॥ ४२ ॥ ॥ ४३ ॥

तदिति । हे शोभने तत्तस्मात्कारणात् भवितव्यः भविष्यन् प्रियसङ्गमो यस्य तत्तथोक्तम् इदं वपुः परिरक्ष । तथाहि रविपीतजला नदी तपात्यये प्रावृषि । प्रावृट् तपात्यय इति हलायुधः । पुनरोघेन प्रवाहेण युज्यते सङ्गच्छते हि ॥ ४४ ॥

इत्थमिति । इत्थमनेन प्रकारेण अदृश्यरूपं किमपि भूतं कश्चित्प्राणी । युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिष्वित्यमरः । रतेः मदनदाराणां

तस्य् तत्रयाच्च कुसुमायुधबन्धुरेना-
माश्वासयत् सुचरितार्थपदै र्वचोभिः॥४५॥
अथ मदनबधूरुपप्लवान्तं
व्यसनकृशा परिपालयाम्बभूव।
शशिन इव दिवातनस्य लेखा
किरणपरिक्षयधूसरा प्रदोषम्॥४६॥

इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये रतिविलापो नाम चतुर्थः सर्गः॥

मरणव्यवसायबुद्धिं मरणोद्योगबुद्धिं मन्दीचकार निवारयामास तत्रर्थः। मूढ़ाल्पापटुनिर्भाग्या मन्दा-इतत्रमरः। अथ कुसुमायुधबन्धुः वसन्तश्च तत्प्रतत्र-यात् तस्मिन् भूते विश्वासात्। प्रतत्रयोऽधीनशपथ-ज्ञानविश्वासहेतुष्वितत्रमरः। एनां रतिं सुष्ठु, चरि-तार्थानि पदानि येषां तैः वचोभिः वाक्यैः आश्वास-यत्। सर्व्वथा ते देवताप्रसादात् प्रियसङ्गमो भविष्यतीत्यादिवचनैः असा.।ः दुःखमपासकारे-तत्रर्थः॥४५॥

अथेति। अथानन्तरं व्यसनेन दुःखेन कृशा मदनबधूः रतिः उपप्लवान्तं विपदवधिं किरणपरि-चयेण धूसरा मलिना दिवातनस्य दिनभवस्य।

सायञ्चिरमित्यादिना ट्युप्रत्ययः। शशिनः चन्द्रस्य लेखा प्रदोषं रात्रिमिव परिपालयाम्बभूव प्रतीक्षाञ्चक्रे। पुष्पिताग्रावृत्तम्। अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्षणात्॥ ४६॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां चतुर्थः सर्गः।

—०ः०—

## पञ्चमः सर्गः।

**तथा समक्षं दहता मनोभवं**
**पिनाकिना भग्नमनोरथा सती।**
**निनिन्द रूपं हृदयेन पार्वती**
**प्रियेषु सौभाग्यफला हि चारुता॥१॥**

तथेति। पर्वतस्यापत्यं स्त्री पार्वती तथा तेन प्रकारेण अक्ष्णोः समीपे समक्षं पुरतः। अव्ययं विभक्तिसमीपसमृद्धीत्यादिना अव्ययीभावः। मनोभवं मन्मथं दहता भस्मीकुर्वता पिनाकिना ईश्वरेण भग्नः खण्डितः मनोरथः अभिलाषो यस्याः सा

इयेष सा कर्त्तुमवन्ध्यरूपतां
समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ॥२॥

तयोक्ता सती हृदयेन मनसा रूपं सौन्दर्यं निनिन्द धिक् मे रूपं यत् हरमनोहरणाय नालमिति गर्हितवतीत्यर्थः। युक्तञ्चैतदित्याह तथाहि चारुता सौन्दर्यं प्रियेषु पतिषु विषयेषु सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा तयोक्ता। सौन्दर्यस्य तदेव फलं यद्भर्त्तृ सौभाग्यं लभ्यते नो चेत् विफलं तदिति भावः। अस्मिन् सर्गे वंशस्थं वृत्तम्। जतौ तु वंशस्थमुदीरितं जराविति लक्षणात् ॥१॥

इयेषेति। सा पार्व्वती समाधिम् एकाग्रताम् आस्थाय अवलम्ब्य तपोभिर्व्वक्ष्यमाणनियमैः करणभूतैः आत्मनः स्वस्य अवन्ध्यरूपतां सफलसौन्दर्यं कर्त्तुम् इयेष इच्छति स्म तपसा शिवं वशीकर्त्तुमुद्युक्तेत्यर्थः। अन्यथा ततोऽन्यप्रकारेण कथं वा तद्द्वयमवाप्यते। किं तद्द्वयं तथाभूता विधा प्रकारो यस्य तत् तथाविधं प्रेम स्नेहः येनार्द्धाङ्गहरा भवेदिति भावः। तादृशः पतिश्च यो मृत्युञ्जय इतिभावः। इयमेव खलु स्त्रीणामपेक्षितं यद्भर्त्तृवाल्लभ्यं जीवद्भर्त्तृकत्वञ्चेति तच्च तपश्चर्य्यैकसाध्यमिति निश्चिकायेत्यर्थः।

निशम्य चैनां तपसे कृतोद्यमां
सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो मुनिव्रतात् ॥३॥
मनीषिताः सन्ति गृहेषु देवता-
स्तपः क्व वत्से क्व च तावकं वपुः ।

अत मनुः । यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम् ।
तत्सर्व्वं तपसा प्राप्यं तपो हि दुरतिक्रममिति ॥ २ ॥

निशम्येति । मेना मेनका च गिरीशप्रतिसक्तमानसां हरासक्तचित्तां तपसे तपश्चरणाय कृतोद्यमां कृतोद्योगां सुतां निशम्य श्रुत्वा एनां पार्व्वतीं वक्षसा परिरभ्य आलिङ्ग्य महतो मुनिव्रतात् तपसो निवारयन्ती उवाच । मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् वारणार्थानामीप्सित इति नापादानत्वम् तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् ध्रुवमपायेऽपादानमिति अपादानत्वमेव स्यात् यथाह भाष्यकारः । यत्र मिथ्या सम्प्राप्य निवर्त्तते तत्र ध्रुवमपायेऽपादानमिति प्रसिद्धम् ॥३॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह

मनीषिता इति । हे वत्से मनसा ईषिताः इष्टाः मनीषिताः । पृषोदरादित्वात्साधु । देवताः प्रजरा-

पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥४॥
इति ध्रुवेच्छामनुशासती सुतां
शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥५॥

दयः गृहेषु सन्ति त्वं ता आराधयेति शेषः । तपः क्व तवेदं तावकम् । युष्मदस्मदोरन्यतरस्यां खञ् च इत्यण्प्रत्ययः तवकममकावेकवचने इति तवकादेशः । वपुश्च क्व । तथाहि पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत । पतत्रिणः पुनः पक्षिणस्तु पदं न सहेत अतिसौकुमार्याद्गृहिव्योपभोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः । अत्र दृष्टान्तालङ्कारः॥४॥

इतीति । इत्येवम् अनुशासती उपदिशन्ती मेना ध्रुवेच्छां स्थिरव्यवसायां सुतां पार्व्वतीम् उद्यमादुद्योगात्तपोलक्षणान्नियन्तुं निवारयितुं न शशाक समर्था नाभूत् । तथाहि ईप्सितार्थे इष्टार्थे स्थिरनिश्चयं मनः निम्नाभिमुखं पयश्च कः प्रतीपयेत् प्रतिकूलयेत् प्रतिनिवर्त्तयेदित्यर्थः । निम्नप्रवणं पय इव इष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः । अत्र दीपकानुप्राणितोऽयमर्थान्तरन्यासालङ्कारः ॥५॥

कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञं पितरं मनस्विनी।
अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपः समाधये ॥ ६ ॥
अथानुरूपाभिनिवेशितोषिणा
कृताभ्यनुज्ञा गुरुणा गरीयसा।
प्रजासु पश्चात् प्रथितं तदाख्यया
जगाम गौरी शिखरं शिखण्डिमत् ॥ ७ ॥

कदाचिदिति। अथ कदाचित् मनस्विनी स्थिरचित्ता सा पार्व्वती मनोरथज्ञम् अभिलाषाभिज्ञं पितरं हिमवन्तम् आसन्नसखी आप्तसखी सैव मुखम् उपायः। मुखं निःसरणे वक्रे प्रारम्भोपाययोरपीति विश्वः। तेन फलोदयः फलोत्पत्तिः अन्तः अवधिर्यस्य तस्मै तपःसमाधये तपोनियमार्थम् आत्मनः स्वस्य अरण्यनिवासं वनवासम् अयाचत। दुह्याचित्यादिना द्विकर्म्मकत्वम् ॥ ६ ॥

अथेति। अथ गौरी अनुरूपेण योग्येन अभिनिवेशेनाग्रहेण तुष्यतीति तथोक्तेन गरीयसा पूज्यतमेन गुरुणा पित्रा कृताभ्यनुज्ञा तपः कुर्व्विति कृतानुमतिः सती पश्चात् तपः सिद्ध्युत्तरकालं प्रजासु जने

विमुच्य सा हारमहार्यनिश्चया
विलोलयष्टि प्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥
यथा प्रसिद्धैर्मधुरं शिरोरुहै
र्जटाभिरप्येवमभूत्तदाननम्।

तदाख्यया तस्याः गौर्य्याः संज्ञया प्रथितं गौरीशिखर मिति प्रसिद्धमित्यर्थः। शिखण्डिमत् नतु हिंस्रप्राणिप्रचुरमिति भावः। शिखरं शृङ्गं जगाम ययौ ॥७

विमुच्येति। अहार्यनिश्चया अनिवार्यनिश्चया सा गौरी विलोलाभिश्चलाभिः यष्टिभिः प्रतिसरैः प्रविलुप्तं प्रमृष्टं चन्दनं स्तनान्तरगतं येन तं तथोक्तं हारं मुक्तावलीं विमुच्य विहाय बालारुणबभ्रु बाला-र्कपिङ्गलं पयोधरयोः स्तनयोः उत्सेधेन उच्छ्रायेण विशीर्णा विघटिता संहतिरवयवसंश्लेषो यस्य तत्त-थोक्तं वल्कलं कण्ठलम्बि स्तनोत्तरीयभूतं बबन्ध धा-रयामासेत्यर्थः ॥ ८ ॥

यथेति। तस्याः देव्याः आननं तदाननं प्रसिद्धैः भूषितैः। प्रसिद्धौ ख्यातभूषितावित्यमरः। रोह-न्तीतिरुहाः। इगुपधज्ञाप्रीकिरः क इति कप्रत्ययः।

न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥
प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम् ।
अकारि तत्पूर्वनिबद्धया तया
सरागमस्या रसनागुणास्पदम् ॥ १० ॥

शिरसि रुहाः तैः शिरोरुहैः मूर्द्धजैः यथा मधुरं प्रियम् अभूत् । स्वादुप्रियौ तु मधुरावित्यमरः । जटाभिरपेत्रवं मधुरम् अभूत । तथाहि पङ्कजं पद्मं षट्पदश्रेणिभिर्भ्रमरपङ्क्तिभिरेव न । किन्तु सह शैवालसङ्गेन सशैवलासङ्गमपि । तेन सहेति तुल्ययोगे बहुव्रीहिः । प्रकाशते शैवलेनापि शोभत एवेत्यर्थः ॥ ९ ॥

प्रतिक्षणमिति । सा देवी प्रतिक्षणं क्षणे क्षणे कृतरोमविक्रियां पारुष्यात्कृतरोमाञ्चां त्रिगुणां त्रिरावृत्तां यां मौञ्जीं मुञ्जमयीं मेखलां व्रताय तपसे बभार । तदेव पूर्वं प्रथमं यस्य तत्पूर्वं यथा तथा निबद्धया तया मौञ्ज्या अस्या देव्याः रसनागुणस्यास्पदं स्थानं जघनं सह रागेण सरागं सलोहितम् अकारि कृतम् सौकुमार्य्यातिशयादिति भावः ॥ १० ॥

विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥ ११ ॥
महार्हशय्यापरिवर्त्तनच्युतैः
स्वकेशपुष्पैरपि या स्म दूयते ।

विसृष्टेति । तया देव्या विसृष्टरागात् त्यक्तला चारसरञ्जनात् निसृष्टेतिपाठे नितरां त्यक्तलाचारा गात् । अधरात् अधरोष्ठान्निवर्त्तितः रागत्यागेन निष्प्रयोजनत्वादिति भावः । तथा स्तनाङ्गरागेन अरुणितात् अरुणीकृतात् पतनसमये तस्य स्तनयोरु- परोधादिति भावः । कन्दुकाच्च निवर्त्तितः । कुशा- ङ्कुराणाम् आदानेन लवनेन परिक्षता व्रणिता अङ्गु- लयो यस्य स तथोक्तः करः पाणिः अक्षसूत्रप्रणयी अक्षमालासहचरः कृतः ॥ ११ ॥

महार्हेति । महानर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्त्तनेन लुण्ठनेन च्युतै- र्भ्रष्टैः स्वकेशपुष्पैरपि या देवी दूयते स्म क्लिश्यति स्म पुष्पाधिकसौकुमार्य्यादिति भावः । सा देवी बा- हुलतामुपधत्ते उपधानीकरोतीति बाहुलतोपधा- यिनी सती केवले संस्तरनरहिते स्थण्डिले भूमावेव

अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिलएव केवले ॥ १२ ॥
पुनर्ग्रहीतुं नियमस्थया तया
द्वयेऽपि निक्षेप इवार्पितं द्वयम्।
लतासु तन्वीषु विलासचेष्टितं
विलोलदृष्टं हरिनाङ्गनासु च ॥ १३ ॥
अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्द्धयत्

अशेत शयितवती तथा निषेदुषी उपविष्टा च। क्वसुश्चेति क्वसुः उगितश्चेति ङीप्। भूमावेव शयनादिव्यवहारो न जातूपरीतत्रर्थः ॥ १२ ॥

पुनरिति! नियमस्थया व्रतस्थया तया देव्या द्वयेऽपि द्वयं पुनः ग्रहीतुं पुनरानेतुं निक्षेपः अर्पितमिव निक्षेपत्वेन अर्पितं किमु क्वचित् लतासु विलास एव चेष्टितम् हरिणांङ्गनासु विलोलदृष्टं चञ्चलावलोकितञ्च। व्रतस्थायां तस्यां तयोरदर्शनाल्लतादिषु दर्शनाच्च अर्पितमिवेतुत्प्रेक्षा न तु वस्तुतोऽर्पणमस्तीति भावः ॥ १३ ॥

अतन्द्रितेति। सा देवी स्वयमेव अतन्द्रिता असञ्जाततन्द्रासती। तारकादित्वादितच् प्रत्ययाः। वृक्ष

गुहोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥
अरण्यवीजाञ्जलिदानलालिता
स्तथा च तस्यां हरिणा विशश्वसुः।
स्तथा तदीयै र्नयनैः कुतूहलात्
पुरः सखीनाममिमीत लोचने ॥ १५ ॥

कान् स्वल्पघटान्। अल्पे इत्यल्पार्थे क प्रत्ययः। घटाविव स्तनौ तयोः प्रस्रवणैः प्रस्नुतपयोभिः व्यवर्द्धयत्। गुहः कुमारोपि प्रथमाप्तजन्मनां प्रथमलब्धजन्मनाम् अग्रजातानामित्यर्थः येषां वृक्षकाणां सम्बन्धि पुत्रवात्सल्यं सुतप्रेम नापाकरिष्यति। उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्त्तिष्यतइत्यर्थः ॥१४

अरण्येति। अरण्यवीजानां नीवारादीनामञ्जलय स्तेषां दानेनन लालिता हरिणास्च तस्यां देव्यां तथा विशश्वसुः विस्रम्भं जग्मुः। समौ विस्रम्भविश्वासावित्यमरः। यथा कुतूहलादौत्सुक्यात्तदीयैः हरिणसम्बन्धिभिः नयनैः नेत्रैः करणैः स्वकीये लोचने सखीना पुरः पुरतः अनेन तेषां सम्बन्धसहत्वमुक्तम्। अमिमीत अक्षिपरिमानतारतम्यज्ञानायमानं चकारेत्यर्थः। केचित्तु सा पार्व्वती तदीयैर्नेत्रैः कुतूहलात् पुरोऽग्रे वर्त्तमानानां सखीनां

कृताभिषेकां हुतजातवेदसं
त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागम-
न्न धर्म्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥
विरोधिसत्वोज्झितपूर्वमत्सरं
द्रुमैरभीष्टप्रसवार्च्चितातिथि ।

लोचने अभिमीत व्रतत्वस्थान्नात्मनद्गुतग्राङ्गः। माङ्-मानद्गुतग्रस्थाङ्गातोर्लेङ्। इयमेव खलु विश्वासस्य पराकाष्ठा यद्वन्हिपीड़नेऽपि न क्षुभ्यन्तीति भावः॥ १५

तपः प्रभाव माह

कृतेति। कृताभिषेकां कृतस्नानां हुतजातवेदसं हुताग्निकां कृतहोमामित्यर्थः। त्वचा वल्कलेन उत्तरासङ्गवतीं उत्तरीयवतीम् अधीतमस्यास्तीत्यधीतिनीं स्तुतिपाठादिकुर्व्वतीम्। इष्टादिभ्यश्च इतीनिप्रत्ययः तां देवीं दिदृक्षवः द्रष्टुमिच्छवः ऋषयोमुनयः अभ्युपागमन् समुपागताः। नचात्र कनिष्ठसेवादोषइत्याह धर्म्मवृद्धेषु वयो न समीक्ष्यते प्रमाणीक्रियते। सति धर्म्मज्यैष्ठ्ये वयोज्यैष्ठ्यं न प्रयोजकमित्यर्थः। तथाच मनुः! न तेन वृद्धोभवति येनास्य पलितं शिरः। योवा युवाप्यधीयानस्तं देवा स्थविरं विदुरिति॥१५

विरोधिति। विरोधिभिः सत्वैर्गोव्याघ्रादिभिः

नवोटजाभ्यन्तरसम्भृतानलं
तपोवनं तच्च बभूव पावनम ॥ १७ ॥
यदा फलं पूर्वतपः समाधिना
न तावता लभ्यममंस्त काङ्क्षितम्।
तदानपेक्ष्य स्वशरीरमार्दवं
तपो महत् सा चरितुं प्रचक्रमे ॥१८॥

उज्झितपूर्व्वमत्सरं त्यक्तपूर्व्ववैरं हिंसारहितमित्यर्थ द्रुमैः अभीष्टप्रसवेन इष्टफलेन अर्च्चिताः पूजिताः अतिथयो यस्मिन् तत्तथोक्तं नवानामुटजानां पर्णशालानाम् अभ्यन्तरेषु संभृताः सञ्चिताः अनलाः अग्नयो यस्मिन् तत्तथोक्तं तच्च तपोवनं पावयतीति पावनं बभूव। अहिंसातिथिसत्काराग्निपरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः॥ १७ ॥

यदेति। सा देवी यदा यस्मिन् काले तावता। तावत्प्रमाणेन पूर्व्वतपःसमाधिना पूर्व्वेणानुष्ठीयमानप्रकारेण तपोनियमेन काङ्क्षितं फलं लभ्यं लब्धुं शक्यं नामंस्त अशक्यममंस्तेत्यर्थः। तदा तत्काले अविलम्बेनेत्यर्थः स्वशरीरस्य मार्द्दवं मृदुत्वं सौकुमार्य्यम् अनपेक्ष्य अविगणय्य महद् दुश्चरं तपश्चरितुं साधयितुं प्रचक्रमे उपचक्रमे ॥ १८ ॥

क्लमं ययौ कन्दुकलीलयापि या
तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्म्मितं
मृदु प्रकृत्या च ससारमेव च ॥ १९ ॥
शुचौ चतुर्णां ज्वलतां शुचिस्मिता
हविर्भुजां मध्यगता सुमध्यमा ।

क्लममिति। या देवी कन्दुकलीलया कन्दुकक्रीडयापि क्लमं ययौ ग्लानिं प्राप तया देव्या मुनीनां चरितं तीव्रं तपः व्यगाह्यत प्रविष्टम्। अत्रोत्प्रेक्ष्यते ध्रुवम् अस्या वपुः काञ्चनपद्मेननिर्म्मितं सुवर्णकमलेन घटितम् अतएव प्रकृत्या पद्मस्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारञ्च कठिन मेव। तथा च तदुपादानकत्वाद्देव्यां वपुषः सुकुमारस्यापि तीव्र तपः चमत्वमित्युत्प्रेक्षार्थः॥ १९॥

शुचाविति। शुचौ ग्रीष्मे शुचीस्मिता विशदमन्दहासा सुमध्यमा पार्व्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजां अग्नीनां मध्यगता सती नेत्रे प्रतिहन्तीति तां नेत्रप्रतिघातिनीं प्रभां सावित्रं तेजः विजित्य न विद्यते अन्यत्र दृष्टियस्याः सा अनन्यदृष्टिः सती सवितारं सुर्य्यमैक्षत ददर्श। ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशय इति स्मरणात् पञ्चाग्निमध्ये

विजितत्र नेत्रप्रतिघातिनीं प्रभा
मनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥
तथातितप्तं सवितु र्गभस्तिभि-
र्मुखं तदीयं कमलश्रियं दधौ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैः शनैः श्यामिकयाकृतं पदम्॥२१॥
अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः।

तपश्चचारेत्यर्थः। तत्र सवितैव पञ्चमोऽग्निः अग्निः सविता सवितैवाग्निरिति श्रौतलिङ्गात्॥ २० ॥

तथेति। सवितुः सूर्य्यस्य गभस्तिभिः किरणै तथा पूर्वोक्तप्रकारेणातितप्तं सन्तप्तं तस्या इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप। यथा रवितापात् कमलं न म्लायति प्रत्युत विकसितं तथा तदीयं मुखमासीदिति भावः। किन्तु अस्य मुखस्य दीर्घयोरपाङ्गयोः केवलं नेत्रान्तयोरेव शनैः शनैः मन्दं मन्दं श्यामिकया कालिम्ना पदं स्थानं कृतं तयोः सौकुमार्य्यादित्यर्थः॥ २२ ॥

अयाचितेति। अयाचितोपस्थितम् अप्रार्थितोपनतं केवलम् अम्बु, उदकं रसात्मकस्य अमृतमयस्य

बभूव तस्याः किल पारणाविधी
न वृक्षवृत्तिव्यतिरिक्तसाधनः ॥ २२ ॥
निकामतप्ता विविधेन वह्निना
नभश्चरेणेन्धनसम्भृतेन सा ।
तपात्यये वारिभिरुक्षिता नवै
र्भुवा सहोष्माणममुञ्चदूर्द्धगम् ॥ २३ ॥

उडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य रश्मयश्च तस्याः पार्वत्याः पारणाविधिः अभ्यवहारकर्म्म बभूव तावन्मात्रसाधनकोऽभूदित्यर्थः। साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः। किलेति प्रसिद्धौ। वृक्षाणां या वृत्ति जीवनोपायस्तद् व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः पारणाविधि र्न बभूव। वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेन इन्दुकिरणैश्च जीवतीति प्रसिद्धम् अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः ॥ २२ ॥

निकामेति। विविधेन पञ्चविधेनेत्यर्थः नभश्चरेण खेचरेण आदित्यरूपेणेत्यर्थः। इन्धनसम्भृतेन काष्ठसमिद्धेन वह्निना निकाममत्यन्तं तप्ता सा अम्बिका तपात्यये ग्रीष्मान्ते प्रावृषीत्यर्थः। नवै र्वारिभिः उक्षिता सिक्ता सती भुवा पञ्चाग्नितप्तया सह ऊर्द्धगमूर्द्धप्रसृतम् ऊष्माणं वाष्पम् अमुञ्चत्। ग्रीष्मोष्मवाष्प ऊष्माण इति यादवः ॥ २३ ॥

स्थिता क्षणं पक्ष्मसु ताड़िताधराः
पयोधरोत्सेधनिपात चूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदविन्दवः॥ २२

स्थिता इति। उदकस्य विन्दवः उदविन्दवः मन्थो दनेत्यादिना उदकशब्दस्य उदादेशः। प्रथमे उदविन्दवः प्रथम विशेषणात् विन्दूनां विरलत्वं बहुवचनान्नाति विरलत्वञ्च गम्यते तथा च चिरत्वनाभ्यन्तरगमनयो र्निर्वाहः। तस्याः पार्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः स्थिताः इति पक्ष्मणां सान्द्रत्वं क्षणमिति स्निग्धत्वञ्च गम्यते। अनन्तर ताड़ितः व्यथितः अधर ओष्ठो यैस्ते तथोक्ताः एतेनाधरस्य मार्द्दवं गम्यते। ततः पयोधरो स्तनयोरुत्सेधे उपरिभागे निपातेन पतनेन चूर्णिताः जर्जरिताः कुचकाठिन्यातिति भावः। तदनु वलीषु उदररेखासु स्खलिताः निम्नोन्नतत्वादिति भावः। इत्थं चिरेण न तु शीघ्रं प्रतिबन्ध बाहुल्यादिति भावः नाभिं प्रपेदिरे प्रविष्टाः न तु निर्ज्जग्मुः एतेन नाभे र्गाम्भिर्य्यंञ्च गम्यते। अत्र प्रतिपदमर्थवत्त्वात्परिकरालङ्कारः॥ २४॥

शिलाशयान्तामनिकेतवासिनीं
निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयै-
र्महातपः साच्य इव स्थिताः चपाः॥२५

निनाय सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा ।

शिलेति। निरन्तरासु नीरन्ध्रासु अन्तरे मध्य-वातो यासां वृष्ट्योयाता वृष्टयस्तासु अन्तरवातवृष्टिषु न निकेते गृहे वसतीत्यनिकेतवासीम् अनावृतदेश वासिनीमित्यर्थः। शिलायां शेत इति शिलाशयां शिलातलशायिनीम्। अधिकरणे शेतेरिति अच् प्रत्ययः। तां पार्वतीं साचाद् द्रष्टा साची। साचाद् द्रष्टरि संज्ञायाम् इती निप्रत्ययः। तस्य कर्म साच्यं महातपसः साच्ये स्थिताः चपाः तडिन्मयैः विद्युद्रूपैः उन्मिषितैरवलोकनैः व्यलोकयन्निव इवेति चचुषा विलोकनमुत्प्रेचते साच्यन्तु आदित्य चन्द्रावनिलोऽन-लश्च द्यौर्भूमिरापोहृदयं यमश्च। अहश्चरात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तमिति प्रमाण-सिद्धत्वात् नोत्प्रेच्यमित्यनु सन्धेयम्॥ २५॥

परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥
मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥२७॥

एवं वर्षासु विहितं तपः प्रकारमुक्त्वा सम्प्रति हेमन्ते तपश्चरणप्रकारमाह।

निनायेति। सा पार्वती उत्किरन्ति क्षिपन्तीत्युत्किराः इगुपधज्ञेत्यादिना कः। अत्यन्तं हिमानामुत्किराः अनिलाः यासुः ता सहस्यरात्रीः पौषरात्रीः। पौषे तैषसहस्यौ द्वावित्यमरः। उदके वासः उदवासः पेषं वासवाहनधिषु च तुदादेशः। उदवासे तत्परा आसक्ता तथा परस्परमाक्रन्दिनि अन्योन्यमाक्रोशिनि पुरः अग्रे वियुक्ते: विरहिणि वियोगप्राप्त इति यावत्। चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोश्चक्रवाकयो र्मिथुने द्वन्द्वे कृपावती सती निनाय॥ दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु कामितयेति वाच्यावकाशः। अप्सु वासस्तु हेमन्ते क्रमशो वर्द्धयेत्तप इति मनुः॥ २६ ॥

स्वयंविशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः।
तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च तां पुराविदः ॥२८॥

सुखेनेति। सा पार्वती निशि रात्रौ पद्मवत् सुगन्धिना सुरभिणा गन्धस्येत्यादिना इकारः। प्रवेपमानः कम्पमानः अधर ओष्ठएव पत्रं दलं तेन शोभत इति तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण चता नाशिताः पद्मसम्पदो यासाम् तासाम् अपां सरोजसन्धानं पद्मसङ्घटनम् अकरोदिवेत्युत्प्रेक्षालङ्कारः। पद्मान्तरन्तुहिने नोपहन्यते तन्मुखपद्मन्तु न तथेति व्यतिरेकालङ्कारो व्यज्यत इत्युभयोः सङ्करः॥ २७ ॥

स्वयमिति। स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्ति र्जीवनं यस्य तस्य भावस्तत्ता तपसः परा काष्ठा परमुत्कर्षो हि। काष्ठोत्कर्षे स्थितौ दिशीत्यमरः। तया देव्या पुनः तत्पर्णवर्त्तनमप्यपाकीर्णम् अपाकृतम्। अतः पर्णापकारणाद्धेतोः प्रियं वदतीति प्रियम्वदा। प्रियवशे वदः खच् इति खच् प्रत्ययः। अरुर्द्विषदजन्तस्य मुम् इति मुमागः।

मृणालिकापेलवमेवमादिभि
र्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधश्चकार सा ॥ २९ ॥

तां पार्वतीं पुराविदः पुराणज्ञाः तपः करणसमये अविद्यमानं पर्णभक्षणं यस्याः सा अपर्णा इति वदन्ति नामान्तरसमुच्चयार्थश्चकारः । स्वयं प्रियं विदाः परेषामपि प्रियवादभाजनानि भवन्तीति भावः। अतापर्णामित्यपपाठः इति शब्दाभिहिते द्वितीयानुपपत्तेः। यथाह वामनः । निपातेनाप्यभिहिते कर्म्मणि न कर्म्म विभक्तिः परिगणनस्य प्रायिकत्वादिति ॥ २८ ॥

मृणालिकेति । मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयम् अङ्गं शरीरम् एवम् उक्तप्रकारतोयाग्निमध्यवासव्रतमादिर्येषां तैः व्रतैः अहश्च निशा च अहर्निशम् । समाहारे द्वन्द्वैकवद्भावः । अत्यन्त संयोगे द्वितीया । ग्लपयन्ती कर्षयन्ती सा पार्व्वती कठिनैः क्लेशसहैरित्यर्थः । शरीरैः उपार्ज्जितं सम्पादितं तपस्विनाम् ऋषीणां तपः दूरमत्यन्तम् अधश्चकार तिरश्चकार अतिशिश्ये इत्यर्थः तपस्विभिरपेत्रवं तपः कर्त्तुं न शक्यत इति तात्पर्य्यार्थः ॥ २९ ॥

अथाजिनाषाढ़धरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥
तमातिथेयी बहुमान पूर्व्वया
सपर्य्यया प्रत्युदियाय पार्व्वती ।

अथेति । अथ अनन्तरम् अजिनं कृष्णमृगत्वक् आषाढ़ः प्रयोजनमस्येत्याषाढ़ः पालाशदण्डः । पाला शोदण्ड आषाढ़ इत्यमरः । विशाखाषाढ़ादण् मन्थ-दण्डयो इत्यण् प्रत्ययः । तयोर्धरः तयोक्तः प्रगल्भ वाक् प्रौढ़वचनः ब्रह्ममयेन वैदिकेन तेजसा ब्रह्म वर्च्चसेनेत्यर्थः ॥ ज्वलन्निव स्थितः इवशब्दो निर्द्धार-णार्थः कश्चिदनिर्द्दिष्टः जटिलो जटावान् ब्रह्मचारी-त्तिशेषः । पिच्छादित्वादि लच् प्रत्ययः । शरीरबद्ध बद्धशरीरः शरीरवानित्यर्थः । वाहिताग्न्यादिषु पाठात् साधुः । प्रथमाश्रमो यथा ब्रह्मचर्य्याश्रम इव यथा शब्द इवार्थे तपोवनं देव्या इति शेषः विवेश प्रविष्टवान् ।

तमिति । अतिथिषु साध्वी आतिथेयी । पथ्य-तिथ्यादिना ढञ् प्रत्ययः । ठिड्ढाण ञित्यादिना

भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥३१॥
विधिप्रयुक्तां परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन् ऋजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥

ङीप्। पार्व्वती तं ब्रह्मचारिणं बहुमानपूर्व्वया बहुमानः पूर्व्वो यस्यास्तया गौरवपूर्वेत्यर्थः सपर्य्यया अर्च्चया सपर्य्यार्च्चार्हणाः समा इत्यमरः। प्रत्युदियाय प्रत्युज्जगाम। कथं समानेऽपि तस्यास्ताहशी प्रतिपत्तिरत आह। साम्ये सत्यपि निविष्टचेतसां स्थिरचित्तानां वपुर्विशेषेषु व्यक्तिविशेषेषु अतिशयितं गौरवं यासु ताः अतिगौरवा अतिगौरवसहिताः क्रियाः चेष्टाः भवन्ति प्रवर्त्तन्त इत्यर्थः। साधवो न साम्याभिनिवेशिन इति भावः॥ ३१ ॥

विधीति। स ब्रह्मचारी विधिना प्रयुक्तामनुष्ठितां सत्क्रियां पूजां परिगृह्य स्वीकृत्य क्षणं परिश्रमं विश्रामञ्च विनीय नाम नामेत्यपरमार्थे। अथ उमाम् ऋजुनैव विलासरहितेनैव चक्षुषा पश्यन् अनुज्झितक्रमः अत्यन्तोचितपरिपाटीकः सन् वक्तुं प्रचक्रमे आरेभे॥ ३२ ॥

अपि क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नान विधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्त्तसे
शरीरमाद्यं खलु धर्म्मसाधनम् ॥३३॥
अपि त्वदावर्जितवारिसम्भृतं
प्रवालमासामनुबन्धि वीरुधाम् ।

अपीति । अत्र अपिशब्दाः प्रश्ने । क्रियार्थं होमादिकर्मानुष्ठानार्थं समिधश्च कुशाश्च समित्कुशम् । जातिरप्राणिनामिति द्वन्द्वैकवद्भावः । सुलभमपि सुलभं कच्चित् जलानि ते तव स्नानविधि क्षमाणि स्नानक्रियायोग्यानि कच्चित् किञ्च स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्त्तसे अपि देहमपीड़यित्वा तपश्चरसि कच्चिदित्यर्थः । युक्तञ्च नामैतत् खलु यस्मात् शरीरम् आद्यं धर्म्मसाधनम् । धर्म्मस्तु कायेन मनसा वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुरेव मुख्यं साधनं सति देहे धर्म्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते । अतएव सततमात्मानमेव गोपायीतेति श्रुतिः ॥ ३३ ॥

अपि त्वदेति । त्वया आवर्ज्जितेन सिक्तेन वारिणा सम्भृतं जनितम् आसां वीरुधां लतानां प्रवालं पल्ल-

चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥ ३४॥
अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भ प्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनै-
स्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥ ३५ ॥

वम् अनुबन्धेऽपि अनुस्यूतं किं यत् प्रवालं चिरोज्झितश्चिरकालतत्यक्तः लाक्षारागयोगेन तत्तथापि पाटलं स्वभावरक्तमित्यर्थः तेन चिरोज्झितालक्तकपाटलेन ते तव दन्तवाससा अधरेण। ओष्ठाधरौ तु रदनच्छदौ दशनवाससौ इत्यमरः। तुलां साम्यम् आरोहति गच्छतीत्यर्थः। अत्र तुला शब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि तुल्यार्थैरतुलोपमाभ्यामिति न तृतीया प्रतिषेधः तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति ॥ ३४ ॥

अपीति। करस्थान् दर्भान् प्रणयेन स्नेहेन अपहरन्तीति ते तथोक्तेषु सापराधेष्विति भावः अपराधिष्विति पाठे दर्भाणां प्रणयेन प्रार्थनया अपराधिषु हरिणेषु विषये ते मनः प्रसन्नमपि न क्षुभितं किं सापराधेष्वपि न कोपितव्यं तपस्विभिरिति भावः।

यदुच्यते पार्व्वति पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने
तपस्विनामप्युपदेशतां गतम् ॥३६॥

हे उत्पलाक्षि ये हरिणाः प्रवलैश्चञ्चलैर्विलोचनैर्नेत्रैः तव अक्षि साहश्यं प्रजुञ्जत एव अभिनयन्तीव प्रसन्नत्वात् मृगनेत्राणित्वन्नयनैः साम्यमुपयान्तीति भावः । उत्पलक्षेपचलैरिति पाठान्तरे उत्पल कम्पचलैः भावानयने द्रव्यानयनमितिन्यायेन क्षिप्यमाणोत्पलचलैरितर्थः ॥ ३५ ॥

यदिति । हे पार्व्वति रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भवतीति यदुच्यते लोकैरिति शेषः । तद्वचः न व्यभिचरति नस्खलतीतत्यव्यभिचारि सतयम् । यत्राकृतिस्तत्र गुणाः सुरूपाः पापसमाचारा भवन्तीतत्रादयो लोकवादा न विसंवादमासादयन्तीतत्रर्थः । किमिति ज्ञायते तथाहि हे उदारदर्शने आयताक्षि सुरूपे इतत्रर्थः । अथवा उन्नतज्ञाने विवेकवतीतरर्थः । ते तव शीलं सद्वृत्तं शीलं स्वभावे सद्वृत्त इतत्रमरः । तपस्विनामपि उपदिश्यते अनेनेत्युपदेशः प्रवर्त्तकं प्रमाणं तत्ताम् उपदेशतां गतं प्रा-

विकीर्णसप्तर्षिबलिप्रहासिभि
स्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः।
यथा त्वदीयैश्चरितैरनाविलै
र्महीधरः पावित एव सान्वयः॥ ३७॥
अनेन धर्मः सविशेषमद्य मे
त्रिवर्गसारः प्रतिभाति भाविनि।
त्वया मनोनिर्विषयार्थकामया
यदेकएक प्रतिगृह्य सेव्यते॥ ३८॥

त्तम्। मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्त्तन्त इति भावः॥ ३६॥

विकीर्णेति। एष महीधरः हिमवान् सप्त च ते ऋषयश्च सप्तर्षयः। दिक्सङ्ख्ये संज्ञायाम् इति समासः। विकीर्णैः पर्य्यस्तैः सप्तर्षीणां सम्बन्धिभिः बलिभिः पुष्पोपहारैः प्रहसन्ति ये तथोक्तैः दिवः अन्तरिक्षात् च्युतैः गाङ्गैः सलिलैः तथा न पावितः अनाविलैरकलुषैः त्वदीयैः चरितैः यथा सान्वयः सपुत्रपौत्रः पावितः पवित्रीकृतः॥ ३७॥

अनेनेति। हे भाविनि: प्रशस्ताभिप्राये: अनेन कारणेन धर्म्मः सविशेषं सातिशयम् अद्य मे त्रयाणां धर्म्मकामार्थानां वर्गे त्रिवर्गः। त्रिवर्गो धर्म्मकामार्थैं

प्रयुक्तसत्कारविशेषमात्मना
न मां परं सम्प्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥

श्चतुर्वर्गः समोच्चकैरित्यमरः । तत्र सारः श्रेष्ठः प्रतिभाति । यद्यस्मात् कारणात् मनसोनिर्व्विषयौ अर्थकामौ यस्मात्त्वया त्वया एकः धर्म्मएव प्रतिगृह्य स्वीकृत्य सेव्यते । यत्त्वया अर्थकामौ विहाय धर्म्म एवावलम्बितः अतः सर्व्वेषां नः सश्रेयानिति प्रतिपद्यत इत्यर्थः ॥ ३८ ॥

सम्प्रति मनोरथं जिज्ञासुः प्रस्तौति ।

प्रयुक्तेति । आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं मां परमन्यं सम्प्रतिपत्तुमवगन्तुं नार्हसि हे सन्नतगात्रि सम्नताङ्गि अङ्गगात्रकण्ठेभ्य इति वक्तव्यात् ङीप् यतः कारणात् मनस इषिभिः मनीषिभिर्विद्वद्भिः । पृषोदरादित्वात्साधुः । सतां सङ्गतं सख्यं सप्तभिः पदैरापाद्यत इति साप्तपदीनं सप्तपदोच्चारणसाध्यम् उच्यते तच्चावयोस्त्वत्कृतसत्कार प्रयोगादेव सिद्धमित्यर्थः । साप्तपदीनं सख्यमिति निपातनात् साधु ॥ ३९ ॥

अतोऽत्र किञ्चिद्भवतीं बहुक्षमां
द्विजातिभावादुपपन्नचापलः।
अयं जनः प्रष्टुमनास्तपोधने
न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥ ४० ॥

कुले प्रसूतिः प्रथमस्य वेधस
स्त्रिलोकसौन्दर्यमिवोदितं वपुः।
अन्वेष्यमैश्वर्यसुखं नवं वय
स्तपः फलं स्यात् किमतः परं वद ॥४१

अत इति। हे तपोधने अतः सख्याद्धेतोः अत्र प्रस्तावे बहुक्षमां बहुक्तिसहां यद्वा क्षमावतीं भवतीं त्वां द्विजातिभावाद् ब्राह्मणत्वात् उपपन्नचापलः सुलभ धार्ष्ट्यः अयं जनः स्वयमित्यर्थः॥ किञ्चित् प्रष्टुं मनो यस्य सः किञ्चित्प्रष्टुमनाः प्रष्टुकामः तुम् काम मनसो रपीति मकारलोपः। रहसि भवं रहस्यं गोप्यं न चेत् प्रतिवक्तुमर्हसि ॥ ४० ॥

प्रष्टव्यमाह।

कुल इति। प्रथमस्य वेधसो हिरण्यगर्भस्य कुले अन्वये प्रसूतिः उत्पत्तिः। यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वर इति ब्रह्मपुराणवचनात्। वपुः शरीरं त्रयाणां लोकानां सौन्दर्यमिव उदितम् एकत्र समाहृतम् ऐश्वर्यसुखं सम्पत्सुखम् अन्वेष्यम्

भवत्यनिष्टादपि नाम दुःसहा-
न्मनस्विनीनां प्रतिपत्तिरीदृशी।
विचारमार्गप्रहितेन चेतसा
न दृश्यते तच्च कृशोदरि! त्वयि॥ ४२॥
अलभ्यशोकाभिभवेयमाकृति

अन्वेषणीयं न भवति किन्तु सिद्धमेवेत्यर्थः। वयः नवं यौवनमित्यर्थ। अतः परमतोऽन्यत्। किं तपः फलं स्यात्। वद अस्ति चेदिति शेषः न किञ्चिद-स्तीत्यर्थः॥ ४१॥

भवतीति। दुःसहात् सोढुमशक्यात् अनिष्टात् भर्त्रादिकृतादपि मनस्विनीनां धीरस्त्रीणाम् ईदृशी तपश्चरणलक्षणा प्रतिपत्तिः प्रवृत्तिः। प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये इति केशवः। भवति नाम। नामेतिसम्भावनायाम्। विचारमार्गे प्रहि-तेन चेतसा चित्तेन तदनिष्टञ्च हे कृशोदरि! त्वयि न दृश्यते। विचार्यमाणे तदपि नास्ति असम्भा-वितत्वादित्यर्थः॥ ४२॥

अनिष्टाभावमेव प्रपञ्चयति;—

अलभ्येति। हे सुभ्रु! इयं त्वदीया आकृति-र्मूर्त्तिः अलभ्यः लब्धुमनर्हः शोकेन भर्त्राद्यवमान-जेन दुःखेन अभिभवः तिरस्कारोयस्याः सा तथोक्ता

र्व्विमानना सुभ्रु ! कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः करं ।
प्रसारयेत् पन्नगरत्नसूचये ॥ ४३ ॥

इष्यतइतिशेषः । असम्भावितस्वायमर्थइत्याह । पितुर्गृहे विमानना अवमानः कुतः न सम्भाव्यत एवेत्यर्थः । नचाप्यन्यस्माद्भवतीत्याह । पराभिमर्शःपरधर्षणन्तु तव नास्ति पन्नगरत्नसूचये फणिशिरोमणिशलाकां ग्रहीतुमित्यर्थः । क्रियार्थोपपदस्य च कर्मणि स्थानिनः इति चतुर्थी । करं हस्तं कः प्रसारयेत् । सुभ्रु ! इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् नेयङ्वङ्स्थानावस्त्रीति नदीसंज्ञाप्रतिषेधात् । अम्बार्थनद्योर्ह्रस्वः इति ह्रस्वत्वं नास्ति । तेन ह्रस्व प्रामादिकइति केचित् अन्यत्र तु अप्राणिजातेश्चारज्ज्वादीनाम् इतयत्र अलाबूः कर्कन्धूरितुत्रकारान्तादपुत्रङ्प्रतत्रयमुदाजहार: भाष्यकारः । एतस्मादेव ज्ञापकात् क्वचिदूकारान्तस्यापूङन्तत्वान्नदीत्वे ह्रस्वमितत्राह्नः । अतएवाह वामनः ऊकारादपूत्रङ्प्रकृतेरिति । सुभ्रू:कुतस्तातगृहेऽवमाननमिति पाठान्तरकरणन्तु असाक्षसमेव उक्तोपपत्तिसम्भवात् । अन्यत्रापि सुभ्रु ! त्वं कुपितेतत्रपास्तमप्यनं तत्रक्ता कथा योषितामितत्रादिप्रयोगदर्शनात् वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेतत्रत्वं नोपेक्ष्यम् ॥ ४३ ॥

किमित्यपास्याभरणानि यौवने।
धृतं त्वया वार्द्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥
दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः ।

किमिति। हे गौरि! किमिति केन हेतुना यौवने त्वया आभरणान्यपास्य विहाय वृद्धस्य भावो वार्द्धकम्। मनोज्ञादित्वाद्वुञ्प्रत्ययः। वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणीति विश्वः। तत्र शोभत इति वार्द्धकशोभि वल्कलं धृतम्। प्रदोषे रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा स्फुटचन्द्रतारका विभावरी रात्रिः अरुणाय सूर्यसूताय कल्पते यदि अरुणं गन्तुं कल्पते किं वद ब्रूहि। क्रियार्थोपपदस्येत्यादिना चतुर्थी। दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुणउदेति ततो विभूषणापहारेण तव वल्कलधारणं सङ्गच्छत इतिभावः ॥४४॥

तपःप्रयोजनं निराकर्तुमाह

दिवमिति। दिवं स्वर्गं प्रार्थयसे कामयसे यदि तर्हि श्रमः तपश्चरणप्रयासः वृथा निष्फलः यदि स्वर्गार्थं तप्यसे ततः श्रमं माकार्षीः। कुतः तव

अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत्॥ ४५॥
निवेदितं निश्वसितेन सोष्मणा
मनस्तु मे संशयमेव गाहते।
न दृश्यते प्रार्थयितव्यएव ते
भविष्यति प्रार्थितदुर्लभः कथम्॥ ४६॥

पितुः हिमवतः प्रदेशाः देवभूमयः स्वर्गपदार्थोद्भवत्वाद्दूतव्यर्थः। अथ उपयन्तारं वरं प्रार्थयसे तर्हि समाधिना तपसा अलं न कर्त्तव्यइत्यर्थः। निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया। तथाहि रत्नं कर्त्तृ नान्विष्यति न मृगयते ग्रहीतारमिति शेषः किन्तु तद्रत्नं मृग्यते ग्रहीतृभिरिति शेषः। नहि वरार्थं त्वया तपसि यत्तितयम् किन्तु तेनैव त्वदर्थमिति भावः॥ ४५॥

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमाजन्य प्रश्नेषु च प्रत्युत्तरमनुपलभ्य स्वयमेवाशङ्क्याह निवेदितमिति। सोष्मणा निश्वसितेन निश्वासवायुना निवेदितं चिन्तानुभावेन उष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः। तर्हि किं प्रश्नव्यसनेनेत्याह मनइति। मनस्तु तथापि मे संशयमेव गाहते प्राप्नोति। कुतः ते तव क्षतत्रानां कर्त्तरि वा इति

अहो स्थिरः कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथलम्बिनीर्जटाः
कपोलदेशे कलमाग्रपिङ्गलाः ॥ ४७ ॥
मुनिव्रतैस्त्वामतिमात्रकर्शितां
दिवाकराप्लुष्टविभूषणास्पदाम् ।

षष्ठी । प्रार्थयितव्यः प्रार्थयितुमर्ह एव न दृश्यते प्रार्थितदुर्लभः प्रार्थितोदुर्लभः स कथं भविष्यति नास्तेत्रवेत्यर्थः ॥ ४६ ॥

अथ पतिप्रार्थनामेव सिद्धवत्कृत्वाह,—

अहो इति । अहो चित्रं तव ईप्सितः आप्तुमिष्टः युवा कोऽपि स्थिरः कठिनः वर्तत इतिशेषः । कुतः यो युवा चिराय चिरात्प्रभृति कर्णोत्पलशून्यतां गते प्राप्ते कपोलदेशे गण्डस्थले श्लथाः शिथिलबन्धनाः अतएव लम्बिन्यः ताः श्लथलम्बिनीः कलमाः शालिविशेषाः तेषामग्राणि तद्वत्पिङ्गलः जटाः उपेक्षते यस्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः ॥ ४७ ॥

मुनिव्रतैरिति । मुनिव्रतैः चान्द्रायणादिभिः अतिमात्रम् अत्यन्तं कर्शितां कृशीकृतां दिवाकरेण सूर्य्येण आप्लुष्टानि दग्धानि वातापत संसर्गात्

शशाङ्कलेखामिव पश्यतो दिवा
सचेतसः कस्य मनो न दूयते ॥ ४८ ॥
अवैमि सौभाग्यमदेन वञ्चितं
तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो
न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४९ ॥

स्वदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूषणस्थानानि यस्यास्तां तथोक्ताम् अतएव दिवा अह्नि शशाङ्करेखामिव स्थितां त्वां पश्यतः सचेतसः जीवतः कस्य पुंसः मनः न दूयते न परितप्यते अपि तु सर्व्वस्यैवेत्यर्थः ॥ ४८ ॥

अवैमीति । तव प्रियं वल्लभं सौभाग्यमदेन सौन्दर्य्यगर्व्वेण कर्त्रा वञ्चितं विप्रलब्धम् अवैमि वेद्मि । यः प्रियः चतुरं मधुरम् अवलोकतइति चतुरावलोकिनः अरालपक्ष्मणः कुटिलरोम्णः अरालं वृजिनं जिह्ममित्यमरः । अस्य त्वदीयस्य चक्षुषः आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति दृष्टिपथं न गच्छतीत्यर्थः । तदयं गर्व्वेण हतः निष्फलात्मलाभो जात इति भावः ॥ ४९ ॥

कियच्चिरं श्राम्यसि गौरि ! विद्यते
ममापि पूर्वाश्रमसञ्चितं तपः ।
तदर्द्धभागेन लभस्व काङ्क्षितं
वरं तमिच्छामि च साधु वेदितुम् ॥ ५० ॥

इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्त्तिनीं
विवर्त्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥

कियदिति । हे गौरि! कियत् किम्प्रमाणकं किमवधिकमित्यर्थः चिरं श्राम्यसि तपस्यसि । अत्यन्तसंयोगे द्वितीया । ममापि पूर्व्वाश्रमः प्रथमाश्रमः ब्रह्मचर्य्याश्रमः तत्र सञ्चितं सम्पादितं तपः विद्यते अर्द्धश्चासौ भागश्च तेन तस्य तपसः अर्द्धभागेनैकदेशेन काङ्क्षितम् इष्टं वरम् उपयन्तारं लभस्व तं वरं साधु सम्यग्वेदितुं ज्ञातुम् इच्छामि यद्यसौ योगेत्र भवति तदा ममापि सम्मतिरिति भावः ॥ ५० ॥

इतीति । इति इत्थं द्विजन्मना द्विजेन प्रविश्य अन्तर्गत्वा आत्मयद्रहस्यमुद्घाट्येत्यर्थः । अभिहिता उक्ता सा पार्व्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक समर्था नाभूत् लज्जयेति शेषः । अथो अनन्तरं परिपार्श्ववर्त्तिनीं वयस्यां सखीं विवर्त्तितं

सखी तदीया तमुवाच वर्णिनं
निबोध साधो ! तव चेत् कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं
कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥

विचालितम् अनञ्जनं व्रतवशाद्वर्ज्जितकज्जलं नेत्रं यस्मिन् कर्म्मणि तत्तया ऐक्षत नेत्रसंज्ञयैव प्रत्युत्तरं वाचयाऽकारेत्यर्थः ॥ ५१ ॥

सखीति । तस्याः पार्व्वत्याः इयं तदीया सखी वयस्या तं वर्णः प्रशस्तिरस्ति चौरस्वामौ । सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणं वर्णाद्ब्रह्मचारिणीति इनिप्रत्ययः । उवाच ब्रूते स्म । किमिति । हे साधो ! विद्वन् ! तव कुतूहलञ्चेत् श्रोतुमस्तीति शेषः तर्हि निबोध अवगच्छ आकर्णयेत्यर्थः । बुधअवगमनइति-धातोर्भौवादिकाल्लोट् । श्रोतव्यं किन्तदाह । यस्मै लाभाय इदम् यदर्थम् । अर्थेन सह नित्यसमासः सर्व्वलिङ्गता चेतिवक्तव्यमिति वार्त्तिकनियमात् क्रियाविशेषणम् । एतया पार्वत्या अम्भोजं पद्मम् उष्णवारणम् आतपत्रमिव वपुः शरीरं तपःसाधनं कृतं तपः प्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥ ५२॥

दृङ्मनःसङ्गसङ्कल्पो जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेति । तत्रास्याः काश्चिद्दशाः क्रममनादृत्यैव योजयति इयमित्यादिभिः षड्भिः श्लोकैः ॥

इयं महेन्द्रप्रभृतीनधिश्रिय
श्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥
असह्यहुङ्कारनिवर्त्तितः पुरा
पुरारिमप्राप्तमुखः शिलीमुखः ।

इयमिति । मानिनी इन्द्राणीप्रभृतीरतिशय्य वर्त्तितव्यमित्यभिमानवती इयं पार्वती अधिश्रियः अधिकैश्वर्यान्महेन्द्रप्रभृतीनिन्द्रादीन् चतसृणां दिशा-मीशान् इन्द्रवरुणयमकुबेरान् । तद्धितार्थेत्यादिना उत्तरपदसमासः । अवमत्यावधय मदनस्य निग्रहा-न्निवर्हणाद्धेतोः अकामुकत्वादित्यर्थः । रूपेण सौन्द-र्येण हार्य्यो वशीकरणीयो न भवतीत्यरूपहार्यं पिनाकः पाणौ यस्य तं पिनाकपाणिं हरम् । प्रहर-णार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति साधु । पतिं भर्तारमाप्तुमिच्छति । एतेन सङ्कल्पावस्था सूचिता ॥ ५३ ॥

असह्येति । पुरा पूर्व्वम् असह्येन सोढ़ुमशक्येन हुङ्कारेण रौद्रेण निवर्त्तितः अतएव पुरारिं हरम् अप्राप्तमुखः अप्राप्तफलः विशीर्णमर्त्तेर्नष्टशरीरस्यापि

इमां हृदि व्यायतपातमक्षिणो-
द्विशीर्णमूर्त्तेरपि पुष्पधन्वनः ॥ ५४ ॥

तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥ ५५ ॥

पुष्पधन्वनः कामस्य शिलीमुखो बाणः इमां पार्वतीं हृदि व्यायतः सुदूरावगाढइति यावत् तादृक् पातः प्रहारोयस्मिन् कर्मणि तत्तथा अक्षिणोत् अकर्षत् दग्ध देहस्यापि मार्गणोलग्नः स्मदुः सर्वत्र बाधतइतिभावः । अनेन विवृणतो शैलसुतापि भावमित्यत्रवोक्तं चक्षुः-प्रीतिमनःसङ्गाख्याद्वयमनन्तरावस्थोपयोगितया अनूद्य कार्श्यावस्था सूचिता ॥ ५४ ॥

तदेति । तदेति छेदः तदा प्रभृति तत आरभ्ये-त्यर्थः सप्तम्यर्थस्यापि दा प्रत्ययस्य पञ्चम्यर्थे लक्षणा प्रभृतियोगे पञ्चमीतिनियमात् । पितुर्गृहे उन्मदना उत्कटमन्मथा ललाटस्यालङ्कारः ललाटिका तिलकः । कर्णललाटात्कन् अलङ्कारे इति कन्प्रत्ययः । तस्या-श्चन्दनेन धूसराः धूसरवर्णा अलकाः चूर्णकुन्तलाः यस्याः सा तथोक्ता बाला पार्वती जातु कदाचिदपि तुषारसङ्घाताः तुषारघनास्तएव शिलास्तासां तलेषु उपरिभागेष्वपि निर्वृतिं सुखं न लभते स्म । एते-

उपात्तवर्णे चरिते पिनाकिनः
सबाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका
वनान्तसङ्गीतसखीररोदयत् ॥ ५६ ॥
त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत ।

रात्त्रपरसंज्ञा विषयविद्वेषावस्था द्वादशावस्थापक्षे संज्वरश्च व्यजायत ॥ ५५ ॥

उपात्तेति । पिनाकिनः शम्भोश्चरिते त्रिपुरविजयादिचेष्टिते उपात्तवर्णे प्रारब्धगीतक्रमे । गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यत इति हलायुधः । सबाष्पे गद्गदे कण्ठे स्खलितैः विशीर्णैः पदैः सुप्तिङन्तरूपैः करणैः वनान्ते सङ्गीतेन निमित्तेन सखीर्वयस्याः किन्नरराजकन्यका अनेकशो बहुशः अरोदयत् अश्रुमोक्षमकारयत् । हरचरितगानजनितमदनवेदनामेनां वीक्ष्य किन्नर्योऽपि रुरुदुरिति भावः । अत्र वर्णस्खलनलक्षणकार्योक्त्या पुनःपुनस्तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यते अन्यथा सखीरोदनानुपपत्तेरिति द्वादशावस्थापक्षे तु प्रलापावस्था च व्यज्यते । प्रलापो गुणकीर्त्तनमित्यालङ्कारिका ॥५६ ॥

त्रिभागेति । किञ्चेति चार्थः शिष्यतइतिशेषः कर्मणिघञ् । त्रिभ्यो भागेभ्यः शेषासु अवशिष्टासु । यद्वा

क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवा-
गसत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥
यदा वुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम् ।

रात्रेस्त्रियामत्वेन प्रसिद्धत्वात् तृतीयो भागः त्रिभागः संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते यथा शतांशः सहस्रांशइति । त्रिभागः शेषो यासां तासु निशासु क्षणं क्षणमात्रं नेत्रे निमील्य मीलयित्वा सहसा सद्यः हे नीलकण्ठ ! क्व व्रजसि कुत्र गच्छसीत्यलक्ष्या निर्विषया वाग्वचनं यस्याः सा तथोक्ता तथा असत्येऽमिथ्याभूते कण्ठेऽर्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती । एतेन जागरोन्मादौ सूचितौ ॥ ५७ ॥

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः तत्र स्वप्नसन्दर्शनमुक्ता प्रतिकृतिदर्शनमाह

यदेति । यदा यतइत्यर्थः । यदेति हेताविति गणव्याख्याने अस्योदाहृतत्वात् । त्वं बुधैः मनीषिभिः सर्वगतः सर्वव्यापीत्युच्यसे । ततइत्यध्याहारः । भावे रत्याख्ये तिष्ठतीति भावस्थं त्वय्यनुरागिणमित्यर्थः इमं जनम् इममित्यात्मनिर्देशः । कथं न वेत्सि न

इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥
यदा च तस्याधिगमे जगत्पते
रपश्यदन्यं न विधिं विचिन्वती।
तदा सहास्माभिरनुज्ञया गुरो
रियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥
द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि।

जानासीति मुग्धया मूढ़या अकिञ्चित्करश्चित्रगतोपालम्भइत्यजानानयेत्यर्थः। तया स्वहस्तेनोल्लिखितः चित्रे लिखितश्चन्द्रशेखरः रहसि एकान्ते सखीमात्रसमक्षमित्यर्थः। उपालभ्यत साधिक्षेपमुक्तश्च। उक्तसमुच्चयार्थश्चकारः। यद्यपि रहसीत्युक्तं तथापि सखी समक्षकरणात्सञ्जातरागोव्यज्यतइव ॥ ५८ ॥

यदेति। जगत्पतेस्तस्य श्वरस्याधिगमे प्राप्तौ अन्यं विधिम् उपायं विचिन्वती मृगयमाणा यदा नापश्यत् तदा इयं पार्वती गुरोः पितुः अनुज्ञया अस्माभिः सह तपसे तपश्चरितुं तपोवनं प्रपन्ना प्राप्ता ॥ ५९ ॥

द्रुमेष्विति। सख्या पार्वत्या स्वयं कृतं जन्म येषां

न च प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥६०॥

न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रोत्तरमीक्षिताम् इमाम्।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

तेषु स्वयं रोपितेष्वित्यर्थः। तपसः साक्षिषु साक्षाद्दृष्टेषु एषु द्रुमेष्वपि फलं दृष्टं लब्धं जनितमित्यर्थः। अस्याः पार्वत्याः शशिमौलिसंश्रयः चन्द्रशेखरविषयः मनोरथस्तु प्ररोहाभिमुखः अङ्कुरोन्मुखोऽपि न दृश्यते प्ररोहस्त्वङ्कुर इति वैजयन्ती। स्वयं रोपित वृक्षफलकालेऽपि अस्याः मनोरथस्य नाङ्कुरोदयोऽप्यस्ति फलाशा तु दूरापास्तेत्यर्थः॥ ६० ॥

न वेद्मीति। प्रार्थितः सन् दुर्लभः प्रार्थितदुर्लभः स देवः तपःकृशां तपसा कृशां क्षीणाम् अतएव सखीभिः अस्रोत्तरम् अश्रुप्रधानं यथा भवति तथा ईक्षिताम् इमां नः सखीं तस्य इन्द्रस्य अवग्रहेण अनावृष्ट्या क्षतां पीड़िताम्। वृष्टिर्वर्षं तद्विघातोऽवग्रहावग्राहौ समावित्यमरः। अवग्रहो वर्षप्रतिबन्ध इत्यर्थः। सीतां कृष्टभुवम्। सीता लाङ्गलपद्धतिरित्यमरः। वृषा वासव इव। वासवो वृत्रहा वृषेत्यमरः। कदा

अगूढसद्भावमितीङ्गितज्ञया
निवेदितो नैष्ठिकसुन्दरस्तया।
अयीदमेवं परिहास इत्युमा
मपृच्छदव्यञ्जितहर्षलक्षणः॥ ६२॥

अभ्युपपत्स्यते कदा अनुग्रहीष्यति न वेद्मि अत्र वाक्यार्थः कर्म्म। तदवग्रहक्षतामितरत्र अवग्रहक्षतामितरनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेः तदिति भिन्नं पदं वेद्मीतप्रसत्र कर्म्म इति युक्तमुत्पश्यामः॥ ६१॥

अगूढेति। इङ्गितज्ञया पार्वतीहृदयाभिज्ञया इङ्गितं हृद्गतो भाव इति सज्जनः। तया गौरीसख्या इत्येवमगूढसद्भावं प्रकाशितसदभिप्रायं यथा तथा निवेदितः ज्ञापितः निष्ठा मरणमवधिर्यस्य स नैष्ठिकः यावज्जीवब्रह्मचारी सुन्दरोविलासी नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः द्वयोरन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः। किन्तु नैष्ठिकत्वविशेषणेन कामित्वविरोधः अथवा देवस्य अलौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः। अव्यञ्जितं हर्षलक्षणं मुखरागादि हर्षलिङ्गं यस्य तथाभूतः सन् अयि गौरि अयीति कोमलामन्त्रणे इदं त्वत्सखीभाषितम् एवं सतत्र किमितरर्थः। परिहासः केलिर्वा। द्रवकेली परिहासाइत्यमरः। इत्येवमुमामपृच्छत् पृष्टवान्॥ ६२॥

अथाग्रहस्ते मुकुलीकृताङ्गुलौ
समर्पयन्ती स्फटिकाक्षमालिकाम्।
कथञ्चिदद्रेस्तनया मिताक्षरं
चिरव्यवस्थापितवागभाषत ॥ ६३ ॥

यथा श्रुतं वेदविदां वर त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥ ६४ ॥

अथेति। अथ अनन्तरम् अद्रेस्तनया पार्वती मुकुलीकृताङ्गुलौ सम्पुटीकृताङ्गुलौ अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः। हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदादिति वामनः। तस्मिन्नग्रहस्ते स्फटिकानामक्षमालिकां जपमालिकामर्पयन्ती आमुञ्चन्ती कथञ्चित् महता कष्टेन चिरव्यवस्थापितवाक् चिरेण स्वीकृतवाक् एतेन लज्जोपरोधो व्यज्यते। मिताक्षरं परिमितवर्णं यथा तथा अभाषत बभाषे ॥ ६२ ॥

किमुवाचेत्याह।

यथेति। हे वेदविदांवर वैदिकश्रेष्ठ त्वया यथा श्रुतं सम्यक् श्रुतम्। श्रुतार्थमेवाह अयं जनः स्वयमित्यर्थः उच्चैः पदस्य शिवरूपोन्नतस्थानस्य लङ्घने आक्रमणे उत्सुकः। किमत्रायुक्तमित्यत्राह इदन्तपः

अथाह वर्णी विदितो महेश्वर
स्तदर्थिनी त्वं पुनरेव वर्त्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं
तवानुवृत्तिं न च कर्त्तुमुत्सहे ॥ ६५॥

तदवाप्तेः तस्य उच्चैःपदस्य अवाप्तेः प्राप्तेः साधनं किल । किलेत्यलीके । अति तुच्छत्वादसाधकमेवेत्यर्थः । तर्हि त्यजयतामित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेनाह मनोरथानां कामानाम् अगतिरविषयो न विद्यते न हि स्वशक्तिपर्य्यालोचनया कामाः प्रवर्त्तन्त इति भावः ॥ ६४ ॥

अथेति । अथ वर्णी ब्रह्मचारी । वर्णिनो ब्रह्मचारिण इत्यमरः । आह उवाचेत्यर्थः । आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूल इत्याह वामनः । किमित्याह महेश्वरः महादेवः विदितः मया ज्ञायत इत्यर्थः । बुद्ध्यर्थत्वाद्वर्त्तमानेक्तप्रत्ययः तद्योगात् षष्ठी च । येन त्वं प्राक् भग्नमनोरथा कृतेति भावः । पुनरेव त्वं तमीश्वरमर्थयते तदर्थिनेत्र्यव तत्काम्रैव प्रवर्त्तसे तत्प्रभावमनुभूयापीति भावः । अनुसरणे को दोषस्तत्राह अमङ्गलाभ्यासे अमङ्गलाचारे रतिर्यस्य तं तथोक्तं तम् ईश्वरं विचिन्त्य विचार्य्य तव अनुवृत्तिम् अनुसरणं कर्तुं नोत्सहे नानुमन्तुं शक्नोमीत्यर्थः ॥ ६५ ॥

अवस्तुनिर्बन्धपरे कथं नु ते
करोयमामुक्तविवाहकौतुकः।
करेण शम्भोर्वलयीकृताहिना
सहिष्यते तत्प्रथमावलम्बनम् ॥६६॥
त्वमेव तावत् परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः।

अवस्त्विति। अवस्तुनि तुच्छवस्तुनि निर्बन्धः अभिनिवेशः परं प्रधानं यस्याः तस्याः सम्बुद्धिः अवस्तुनिर्बन्धपरे पार्वति आमुक्तम् आसञ्जितं विवाहे यत्कौतुकं हस्तसूत्रं तद् यस्य स ते अयं करः। कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहल इति शाश्वतः। वलयीकृताहिना भूषणीकृतसर्पेण शम्भोर्महादेवस्य करेण करणभूतेन तदेव प्रथमं तत्प्रथमम् अपरिचितत्वादतिभयङ्करमिति भावः। तच्च तत् अवलम्बनं ग्रहणञ्चेति कथं नु सहिष्यते न कथञ्चिदपि सहिष्यत इत्यर्थः। अग्रतोयङ्गावि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इतिभावः॥ ६६॥

त्वमेवेति। हे गौरि त्वमेव स्वयम् आत्मना तावदिति मानार्थे। यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः। इदमेवोदाहृतञ्च गणव्याख्याने। परिचिन्तय पर्यालोचय। किमिति कलहंसलक्षणं

वधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ॥६७॥
चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ।

कलहंसचिह्नम् । चिह्नं लक्ष्म च लक्षणमित्यमरः । वध्वाः नवोढाया दुकूलं वधूदुकूलम् ॥ वधूः स्नुषा नवोढा स्त्रीति विश्वः । तथा शोणितबिन्दून् वर्षतीति तथोक्तम् आर्द्रमित्यर्थः गजाजिनञ्च कृत्तिवाससः तत्पिनाकिन इत्याशयः । एते कदाचिदपि योगं सङ्गतिम् अर्हतोयदि अर्हतः किम् एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः । पाणिग्रहणे किल वधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते कृत्तिवाससः पाणिपीड़ने तु दुकूलधारिण्यास्तव स कथं सङ्घटिष्यत इति भावः ॥ ६७ ॥

चतुष्केति । चतुष्के गृहविशेषे यः पुष्पप्रकरः तत्र अवकीर्णयोः न्यस्तयोः कुसुमास्तृतदिव्यभवनभूसञ्चारोचितयोरित्यर्थः तव पादयोः अलक्ताङ्कानि लाक्षारञ्जितानि पदानि पादाकाराणि पादन्यासचिह्नानि । पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयोरिति विश्वः । विकीर्णा विक्षिप्ताः केशाः प्रवृद्धरोरुहाः यासु तासु विकीर्णकेशासु ।

अलक्तकाङ्कानि पदानि पादयो
र्विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥
अयुक्तरूपं किमतः परं वद
त्रिनेत्रवक्षः सुलभं तवापि यत्।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति ॥ ६९ ॥

अत्र तस्य तत्र इत्यश्चेति वचनात् स्वाङ्गाच्चोपसर्जनाद-संयोगोपधात् इति विकल्पाच्च ङीप्। परेतभूमिषु प्रेतभूमिषु श्मशानेष्वित्यर्थः। परोऽपि शत्रुरपि को नाम अनुमन्यते न कोऽपीत्यर्थः। नामेति कुत्सायाम् पिनाकपाणिग्रहणे तस्य परेतभूसञ्चारित्वेन स्वाह-चर्य्यात्तवापि तत्र सञ्चारोऽवश्यम्भावीति भावः॥ ६८॥

अयुक्तेति। त्रिनेत्रवक्षः त्र्यम्बकालिङ्गनमित्यर्थः। तव तत्सम्बन्धितया सुलभमपि सुप्रापञ्च भवतीति शेषः। तवेति शेषे षष्ठी। न लोकाव्ययेत्यादिना कृद्योगलक्षणषष्ठ्या निषेधात्। अतः परम् अस्मात् त्रिनेत्रवक्षोलाभादन्यत् अयुक्तरूपम् अत्यन्तायुक्तं किं वद न किञ्चिदित्यर्थः। प्रशंसायां रूपबिति रूपप्प्र-त्ययः। कुतः यद् यस्मात्कारणात् हरिचन्दनास्पदे हरिचन्दनस्य आस्पदे स्थानभूते अस्मिन् स्तनद्वये चिताभस्म श्मशानभस्म तदेव रजश्चूर्णं कर्त्तृ पदं

इयञ्च तेऽन्या पुरतोविड़म्बना
यदूढ़या वारणराजहार्य्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखोभविष्यति ॥ ७० ॥
इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।

करिष्यति पदं निधास्यति भर्त्तुर्भवस्य भस्माङ्गरागादितिभावः ॥ ६९ ॥

इयमिति । इयञ्च ते तव पुरतः आदावेव अन्या विड़म्बना परिहास इत्यर्थः । का चेत्यताह ऊढ़या परिणीतया ॥ वहेः कर्म्मणिक्तः । वारणराजहार्य्यया गजेन्द्रवाह्यया त्वया अधिष्ठितमारूढ़ं वृद्धमुक्षाणं वृद्धोक्षम् । अचतुरेत्यादिना निपातः । विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखः भविष्यति उपहसिष्यति यत् इयमिति पूर्व्वेण सम्बन्धः । स्मेरेति नमिकम्पिस्म्यजसेत्यादिना रप्रत्ययः ॥ ७० ॥

इयमिति । पिनाकिनः ईश्वरस्य समागमप्रार्थनया प्राप्तिकामनया क्रियमाणयेति शेषः । सम्प्रति इयं शोचनीयतां शोच्यत्वं गतम् । किन्तदाह साप्रागेव हरशिरोगता । अत अतिप्रसिद्धार्थत्वान्न यच्छब्दापेक्षा तदुक्तं काव्यप्रकाशे । प्रक्रान्तप्रसिद्ध

कला च सा कान्तिमती कलावत
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥
वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु।

तुभूतार्थविषयस्तच्छन्दोयदुपादानं नापेक्षतइति। कान्तिमतो नितय्योगे मतुप्। कलावतः चन्द्रस्य कला षोड़शो भागश्च अस्य लोकस्य नेत्रकौमुदी नेत्रनन्दिनीत्यर्थः त्वञ्च। कान्तिमतित्वनेत्रकौमुदीत्व विशेषणयोरुभयत्रापरन्वयः। प्रागेकैव शोचया सम्प्रति तु त्वमप्यपरेतिद्वयं शोच्यमिति पिण्डितार्थः। शोचयत्वञ्च निकृष्टाश्रयणादिति भावः॥ ७२॥

कन्या वरयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जना इति लोकानामाभाणकम्। तत्र किञ्चिदपि नास्तीत्याह

वपुरिति। वपुस्तावदस्य विरूपाणि विकृतरूपाणि अक्षीणि नेत्राणि यस्य तद्विरूपाक्षम्। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् इति षच्प्रत्ययः। वैरूप्यञ्च त्रिनेत्रत्वादिति क्षीरस्वामी। अतो न सौन्दर्यवार्तापीत्यर्थः। अलक्ष्यमज्ञातं जन्म यस्य तस्य भावस्तत्ता कुलमपि न ज्ञायत इत्यर्थः। अलचिता जनिरिति पाठे जनिः उत्पत्तिः अलक्षिता न

वरेषु यद्बालमृगाक्षि मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥
निवर्त्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया ॥७३

स्वाता । अनिरूपितस्वरूपत्वमन्वय स्वभावतोऽयमर्थः । वसुवित्तं दिग-
म्बरत्वेनैव निवेदितं नास्तीति ज्ञापितमित्यर्थः । यदि
वित्तं भवति तदा कथं दिगम्बरोभवति अतोऽज्ञेयं
निर्द्धनोऽयमिति । किं बहुना हे बालमृगाक्षिपार्वति
वरेषु वोढृषु । वरो जामातृवोढाराविति विश्वः ।
यत् रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरन्विष्यते
तत् त्रिलोचने त्र्यम्बके व्यस्तम् एकमपि समस्तं मा
भूदिति भावः अस्ति किं नास्त्येवेत्यर्थः ॥ ७२ ॥

निवर्तयेति । अस्मा दसदीप्सितात् अनिष्टमनो-
रथात् मनः निवर्तय निवारय सा पूर्वोक्ता विधा
प्रकारो यस्य तथोक्तः अमङ्गलशीलइत्यर्थः क्व मह-
दन्तरमित्यर्थः । पुण्यलक्षणा प्रशस्तभाग्यचिह्ना त्वञ्च
क्व अतो न तवायमर्हइत्यर्थः । तथाहि साधुजनेन ।
साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवदिपि विश्वः ।
श्मशानशूलस्य श्मशानभूमिनिखातस्य वध्यशङ्कोः

इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥
उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम् ।

वैदिकी वेदोक्ता यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषः । तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारः यूपसत्क्रिया नापेक्ष्यते नेष्यते । यथा श्मशानस्थूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटसे इति तात्पर्यार्थः ॥ ७३ ॥

इतीति । इत्येवं प्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि सति प्रवेपमानेन चञ्चलेन अधरेण अधरोष्ठेन लक्ष्यः अनुमेयः कोपः क्रोधः यस्यास्तया तयोक्तया पार्वत्या उपान्तलोहिते प्रान्तरक्ते विलोचने विकुञ्चिते कुटिलिते भ्रूलते यस्मिन् तत्तथा सभ्रूभङ्गमित्यर्थः । तिर्यक् साचि आहिते निहिते अनादरात्तिर्यगीक्षितेत्यर्थः ॥ ७४ ॥

उवाचेति । अथ एनं ब्रह्मचारिणम् उवाच च । किमिति परमार्थः तत्त्वतः हरं न वेत्सि न जानासि नूनम् । कुतः यतः माम् एवम् उक्तया रत्या आत्थ

अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ७५ ॥
विपत्प्रतीकारपरेण मङ्गलं
निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः
किमेभिराशोपहतात्मवृत्तिभिः ॥ ७६ ।

ब्रवीषि ब्रुवः पञ्चानामादित इति रूपसिद्धिः । अज्ञानादेवायं शिवद्वेषस्तवेत्याशयेनाह मन्दाः मूढाः । मूढाल्पापटुनिर्भाग्या मन्दा इत्यमरः । लोकसामान्यम् इतरजनसाधारणं न भवतीत्यलोकसामान्यम् अचिन्त्यहेतुकं दुर्बोधकारणकं महात्मनाञ्चरितं द्विषन्ति हेत्वपरिज्ञानात् दूषयन्ति । विद्वांसस्तु कोऽप्यत्र हेतुरस्तीति बहुमन्यन्त इत्यर्थः ॥ ३५ ॥

सम्प्रत्यमङ्गलाभ्यासरतिमित्याद्युक्तदूषणजातं विपदित्यादिभिः षड्भिः श्लोकैः परिहर्त्तुमारभते ।

विपदिति । विपत्प्रतीकारपरेण अनर्थपरिहारार्थिनेत्यर्थः । उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः । भूतिसमुत्सुकेन ऐश्वर्य्यकामेन वा मङ्गलं गन्धमाल्यादिकं निषेव्यते । शरणे रक्षणे साधुः शरण्यः । तत्र साधुरिति यत्प्रत्ययः । शरणं

अकिञ्चनः सन् प्रभवः स सम्पदां
त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्य्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ॥ ७७ ॥

गृहरचितेोरित्यमरः । जगतः शरण्यः तस्य जगच्छर-ण्यस्य निराशिषः निरभिलाषस्य सतः शिवस्य । आशी-रुरगदंष्ट्रायां विप्रवाक्याभिलाषयोरिति शाश्वतः । आशया तृष्णया उपहता दूषिता आत्मवृत्तिः अन्तः-करणवृत्तिः येषां तैः एभिः मङ्गलैः किं वृथेत्यर्थः । पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते । दृष्टावाप्त्यनिष्ट-परिहारार्थिनो हि मङ्गलाचारनिर्बन्धः तदुभयासं-स्पृष्टस्य तु यया कथञ्चिदास्तां को दोष इत्यर्थः । एते-नामङ्गलाभ्यासरतिमित्युक्तं प्रत्युक्तम् ॥ ७६ ॥

अकिञ्चन इति । स हरः न विद्यते किञ्चन द्रव्यं यस्य सः अकिञ्चनः दरिद्रः सन् सम्पदां प्रभवत्यस्मा-दिति प्रभवः कारणं पितृसद्मगोचरः श्मशानाश्रयः सन् त्रयाणां लोकानां नाथः तद्धितार्थेत्यादिना उत्त-रपदसमासः । स देवः भीमरूपः भयङ्कराकारः सन् शिवः सौम्यरूप इत्युदीर्य्यते उच्यते । अतः पिनाकिनो

विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरम्
न विश्वमूर्त्तेरवधार्य्यते वपुः ॥ ७८ ॥

इत्थस्य यथाभूतोऽर्थः यथार्थः तस्य भावः याथार्थ्यं तत्त्वं तद्विदः न सन्ति । लोकोत्तरमहिम्नो निर्लेपस्य यथाकथञ्चिदवस्थानं न दोषायेतिभावः । एतेन अवस्तु-निर्बन्धपरे इति श्लोकोक्तं परिहृतं वेदितव्यम् ॥ ७७ ॥

देवस्य लौकिकमलौकिकञ्च प्रसाधनं नास्तीत्या-शयेनाह ।

विभूषणेति । विश्वं मूर्त्तिर्यस्येति विश्वमूर्त्तिः अष्ट-मूर्त्तेः शिवस्य वपुः शरीरं भूषणैरुद्भासत इति भूषणो-द्भासि स्यात् पिनद्धभोगि आमुक्तभुजङ्गमं वा स्यात् । पिनद्धेति नह्यतेरपिपूर्वात्कर्म्मणि क्तः । वष्टि भागुरि-रल्लोपमवाप्योरुपसर्गयोरिति अकारलोपः । गजा-जिनालम्बि स्यात् अथवा दुकूलधारि स्यात् । कपा-लमस्यास्तीति कपालि ब्रह्मशिरः कपालशेखरं वा स्यात् इन्दुशेखरं वा स्यात् नावधार्य्यते न निर्द्धार्य्यते सर्वं सम्भवतीत्यर्थः । एतेन त्वमेव तावदिति श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥ ७८ ॥

तदङ्गसंसर्गमवाप्य कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये।
तथाहि नृत्याभिनयक्रियाच्युतं
विलिप्यते मौलिभिरम्बरौकसाम्॥७९॥
असम्पदस्तस्य वृषेण गच्छतः
प्रभिन्नदिग्वारणवाहनो वृषा।

अयुक्तरूपं किमतः परं वदेति श्लोकोक्तं प्रत्याह।

तदङ्गेति। तस्य शिवस्य अङ्गं तस्य संसर्गम् अवाप्य आसाद्य चिताभस्मैव रजः विशुद्धये कल्पते अलं पर्याप्तो भवतीत्यर्थः। अलमर्थयोगान्नमः स्वस्तिस्वाहेत्यादिना चतुर्थी। ध्रुवं शोधकत्वं प्रमाणसिद्धमित्यर्थः। प्रमाणमेवाह। तथाहि प्रसिद्धमेवेत्यर्थः। नृत्ये ताण्डवे यः अभिनयः अर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितं चिताभस्मरज इतिशेषः अम्बरौकसां देवानां मौलिभिः विलिप्यते ध्रियते। अशुद्धं चेत् कथमिन्द्रादिभिर्ध्रियेतेत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः॥ ७९॥

यदुक्तं दिगम्बरत्वेन निवेदितं वसु इयस्य तऽन्या पुरतो विडम्बनेत्यादि च तत्रोत्तरमाह।

असम्पद इति। प्रभिन्नो मदस्रावी दिग्वारणः

करोति पादावुपगम्य मौलिना
विनिद्रमन्दाररजोऽरुणाङ्गुली ॥ ८० ॥
विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥

दिग्गजः वाहनं यस्य सः ऐरावतेनोढ़ इत्यर्थः। वृषा देवेन्द्रः असम्पदो दरिद्रस्य वृषेण गच्छतः वृषभारूढ़स्य तस्य ईश्वरस्य पादौ मौलिना मुकुटेन उपगम्य प्रणम्येत्यर्थः। विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैः अरुणाः अङ्गुलयः ययोस्तौ तथोक्तौ करोति। दिग्गजारोहिणाम् इन्द्रादीनामपि वन्द्यस्य इन्दुमौलेः किं सम्पदा वृषारोहणे वा को दोष इत्यर्थः॥ ८० ॥

यदुक्तम् अलक्ष्यजन्मतेति तत्रोत्तरमाह॥

विवक्षतेति। च्युतात्मना नष्टस्वभावेन अतएव दोषं दूषणं विवक्षता वक्तुमिच्छतापि त्वया ईशं प्रति एकम् अलक्ष्यजन्मतेत्येतदेकं वच इत्यर्थः। साधु भाषितं सम्यगुक्तं कुतः यम् ईश्वरम् आत्मभुवोऽपि ब्रह्मणोऽपि ब्रह्मात्मभूः सुरज्येष्ठ इत्यमरः। कारणमामनन्ति उ-

अलं विवादेन यथा श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनः स्थितं
न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥
निवार्यतामालि किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः।

दाहरन्ति विद्वांस इतिशेषः। पाशाधमाखाम्ना-दानितरादिना मनादेशः। स ईश्वरः कथं लब्ध-प्रभवः लब्धजन्मा भविष्यति। अनादिनिधनस्य भग-वतः कारणशङ्काकलङ्कस्य नान्विष्यत इत्यर्थः॥ ८१ ॥

अलमिति। अथवा विवादेन कलहेन अलम् त्वया यथा येन प्रकारेण स ईश्वरः श्रुतः अशेषं कात्स्न्येन तथाविधस्तावत्प्रकार एव अस्तु। मम मनस्तु अत्र ईश्वरे भावः शृङ्गार एकः अद्वितीयो रसः आस्वादो यस्य तत् तथा स्थितम्। तथाहि काम-वृत्तिः स्वेच्छाव्यवहारो वचनीयम् अस्थानसङ्गाप-वादं नेक्षते न विचारयति। न हि स्वेच्छासञ्चा-रिणो लोकापवादाद्बिभ्यतीति भावः॥ ८२ ॥

निवार्यतामिति। हे आलि सखि आलिः सखी वयस्या चेत्यमरः। स्फुरितोत्तराधरः स्फुरणभूयि-

न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक्॥८३॥
इतो गमिष्याम्यथ वेति वादिनी
चचाल बाला स्तनभिन्नवल्कला।
स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः॥ ८४॥

श्लोक: अयं वटुः माणवकः पुनः किमपि विवक्षुः वक्तुमिच्छुः। ब्रुवः स्फुरितोष्ठतया। निवार्यताम्। नहि वक्तुमेव कथं न ददासीत्याह। तथाहि यो महतः पूज्यान् अपभाषते अपवदति न केवलं स पापभाग् भवतीति शेषः। अत्र स्मृतिः। गुरोः प्राप्तः परीवादो न श्रोतव्यः कथञ्चन। कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यत इति॥ ८३॥

सम्प्रति गन्तव्य पचमाश्रयते।

इत इति। अथवा इतोऽन्यत्र गमिष्यामीति वादिनी वदन्ती स्तनाभ्यां भिन्नवल्कला रयवशात् कुचस्रस्तचीरा बाला पार्वती चचाल। वृषराजकेतनः वृषभध्वजस्य स्वरूपमास्थाय निजरूपमाश्रित्य कृतस्मितः सन् तां पार्वतीं समाललम्बे जग्राह॥ ८४॥

तं वीच्य वेपथुमती सरसाङ्गयष्टि
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥८५॥
अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ।

तमिति। तं देवं वीच्य वेपथुमती कम्पवती सरसाङ्गयष्टिः। खिन्नगात्री महादेवदर्शनेन देव्याः सात्त्विकभावोदय उक्तः। निक्षेपणाय अन्यत्र विन्यासाय उद्धृतम् उत्क्षिप्तं पदम् अङ्घ्रिम् उद्वहन्ती शैलाधिराजतनया पार्वती मार्गे अचलः तस्य व्यतिकरेण समाहतया अवरोधनेनेति यावत्। आकुलिता सम्भ्रमिता सिन्धुः नदीव। देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः। न ययौ न तस्थौ लज्जयेति भावः। वसन्ततिलकावृत्तमेतत्॥ ८५॥

अद्येति। चन्द्रमौलौ शिवे हे अवनताङ्गि पार्वति अद्य प्रभृति अस्माद्दिनादारभ्येत्यर्थः। प्रभृतियोगाददेयति सप्तम्यर्थवाचिना पञ्चम्यर्थो लच्यते। तव तपोभिः क्रीतः। दासृङ्दाने दासते आत्मानं ददा-

अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते॥८६

इति कालिदासकृतौ कुमारसम्भवे महा
काव्ये तपःफलोदयो नाम पञ्चमः सर्गः॥

मीति दासः अस्मि इति वादिनि वदति सति। सा देवी अह्नाय सपदि। झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदिद्रुतमित्यमरः। नियमजं तपोजन्यं क्लमं क्लेशम् उत्ससर्ज फलप्राप्त्या क्लेशं विसस्मारेत्यर्थः। तथा हि क्लेशः फलेन फलसिद्ध्या पुनर्नवतां विधत्ते पूर्ववदेवा-क्लिष्टतामापादयतीत्यर्थः। सफलः क्लेशो न क्लेश इति भावः॥८६॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथ सूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनी समाख्यायां पञ्चमः सर्गः॥

———o———

## षष्ठः सर्गः ।

अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम्
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १ ॥
तया व्याहृतसन्देशा सा बभौ निभृता प्रिये ।

अथेति । अथ देवदेवानुग्रहानन्तरं गौरी पार्वती विश्वम् आत्मा स्वरूपं यस्येति विश्वस्य आत्मेति वा विश्वात्मने शिवाय मिथः रहसि । मिथोऽन्योन्यं रहस्यपीत्यमरः । सखीं सन्दिदेश । प्रतिसन्देश क्रियामात्र प्रयोगेऽपि सम्प्रदानत्वाच्चतुर्थी । किमिति भूभृतां नाथः हिमवान् मे मम दाता सन् प्रमाणीक्रियतामित्यर्थः । प्रार्थनायां लोट् । पित्रा दीयमानायाः परिग्रहो मम मद्वाक्यमनुग्रह इति भावः ॥ १ ॥

तयेति । तया सख्या सखीमुखेनेत्यर्थः व्याहृतसन्देशा उक्तवाचिका प्रिये हरे विषये निभृता निश्चला परमासक्तेत्यर्थः सा गौरी मधौ वसन्ते निभृता स्थिरा परभृतया कोकिलया उन्मुखी मुखरा परभृतोन्मुखी । मुखशब्देन अभिभाषणव्यापारो लक्ष्यते । तथा च परभृता मुखेन व्याहरन्तीत्यर्थः । परभृतेति

चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी॥
स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम्।
ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः॥३॥
ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः

क्रियाशब्दविवक्षायां जातेरस्त्रीति ङीप्प्रत्ययो न भवति। तथेत्युपमेयस्य व्यस्तत्वादुपमानवाचिपरभृताशब्दस्य समासः सोढव्यः। अथवा भरणं सम्पदादित्वात् क्विप्। परैर्भृत् यस्यास्तया परभृता इति व्यासेन व्याख्येयम्। पदमञ्जरीकारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह। चूतयष्टिः चूतशाखेव अभ्यासे अन्तिके मधौ। सदेशाभ्याससविधसमर्यादसवेशवत्। उपकण्ठान्तिकाभ्यर्णाभ्याशा अप्यभितोऽव्ययमित्यमरः॥२॥

स इति। सः प्रकृतः। शास्तीति शासनः। बहुलग्रहणात्कर्त्तरि ल्युट्। स्मरस्य शासनः ईश्वरः तथेति प्रतिज्ञाय तथाकरिष्यामीत्युक्त्वेत्यर्थः। उमां कथमपि कृच्छ्रेण विसृज्य तत्र गाढानुरागत्वादिति भावः। ज्योतिर्मयान् तेजोरूपान् सप्तर्षीन् अङ्गिरःप्रभृतीन् सस्मार स्मृतवान्॥३॥

ते इति। ते तपएव धनं येषान्ते तपोधनाः सप्त-

साऽरुन्धतीकाः सपदिप्रादुरासन्पुरः प्रभोः ।४
आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु ।
व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥५॥
मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।
रत्नाक्षसूत्राःप्रव्रज्यांकल्पवृक्षाद्वाश्रिताः ॥६

षैयः प्रभामण्डलैः तेजःपुञ्जेन व्योम आकाशं द्योतयन्तः प्रकाशयन्तः अरुन्धत्या सह वर्त्तन्त इति साऽरुन्धतीकाः सन्तः नद्यृतश्चेति कप्। सपदि प्रभोः ईश्वरस्य पुरः पुरोभागे प्रादुरासन् प्रतत्यक्षा बभूवुः ॥ ४ ॥

इतः परं षड्भिः श्लोकैस्तानेव मुनीन् वर्णयति आप्लुता इत्यादिभिः। उत्किरन्ति विक्षिपन्तीत्युत्किरा इगुपधेत्यादिना कप्रत्ययः। तीरे ये मन्दाराः कल्पवृक्षाः तेषां कुसुमानाम् उत्किराः वीचयः तरङ्गाः येषां तेषु दिङ्नागानां दिग्गजानां मदगन्धो येष्विति तथोक्तेषु व्योमगङ्गाप्रवाहेषु आकाशगङ्गास्रोतःसु आप्लुताः स्नाताः ॥५॥

मुक्तेति। मुक्तानां मौक्तिकानां यज्ञोपवीतानि मुक्तामयानीत्यर्थः बिभ्रतः दधानाः। हेममयानि वल्कलानि येषां ते हैमवल्कलाः। रत्नमयानि अक्ष सूत्राणि येषान्ते रत्नाक्षसूत्राः। प्रव्रज्यां प्रव्रजनम् ।

अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना साक्षात्सप्रणाममुदीक्षिताः ॥७॥
आसक्तबाहुलतया सार्द्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ताःप्रलयापदि ॥८॥

व्रजयजोर्भावे क्यपिति क्यप्। आश्रिताः कल्पवृक्षा इव स्थिताः। अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाश्रमो लक्ष्यते। जक्षुः परिग्रहव्रीड़ां प्राजापत्यास्तपस्विनः इति। सपत्नीकत्वाभिधानात् सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन्निति वानप्रस्थस्योभयथा स्मरणात्।

अध इति। अधः प्रस्थापिताश्वेन सूर्य्यमण्डलोपरिवर्त्तित्वात्सप्तर्षिमण्डलस्येति भावः। समावर्ज्जितकेतुना तन्मण्डलाघातशङ्कया नामितध्वजेन सहस्ररश्मिना सूर्य्येण साक्षात् स्वयमेव सप्रणामम् उदीक्षिताः गमनाभ्यनुज्ञादानपर्य्यन्तमित्यर्थः। भगवतः सूर्य्यस्याप्युपास्या इति भावः॥ ७॥

आसक्तेति। पुनः किं विधाः प्रलयापदि कल्पान्तसङ्कटे आसक्तबाहुलतया दंष्ट्रयेति शेषः। उद्धृतया दंष्ट्रयेति शेषः। भुवा सार्द्धं धरण्या सह महावराहदंष्ट्रायां विश्रान्ताः। महाप्रलयेऽप्यविनाशिन इत्यर्थः॥ ८॥

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इतिकीर्त्तिताः॥९॥
प्राक्तनानांविशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाःफलान्यपि तपस्विनः ॥१०॥
कुलकम् ॥
तेषां मध्यगता साध्वी पत्युःपादार्पितेक्षणा।

सर्गशेषेति। विश्वयोनेः ब्रह्मणः अनन्तरं सर्गशेषस्य प्रणयनात् ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोरित्यर्थः। पुराविद्भिः पुराणवेदिभिः। व्यासादिभिः पुरातनाः धातार इति कीर्त्तिताः। विश्वयोनेरिति सम्बन्धमात्रे षष्ठी तस्यानन्तरमिति भाष्ये दर्शनात्। अपादानत्वविवक्षायां तु पञ्चमी। अयमदः शब्दो यथा शब्दाद्वृत्तादनन्तरमेवेति शाबरभाष्ये दर्शनात्। तथा अथातो धर्मजिज्ञासा वेदाध्ययनादनन्तरमित्याचार्य्याः॥ कविश्च पुराणपत्रापगमादनन्तरमिति एवमन्यत्रापि द्रष्टव्यम्॥ ९॥

प्राक्तनानामिति। प्राक्तनानां जन्मान्तरभवानां विशुद्धानां निर्मलानां परिपाकं फलादानोन्मुखत्वम् उपेयुषां गतानां तपसां फलानि उपभुञ्जाना अपि तपस्विनः तपोनिष्ठाः। प्रारब्धभोगिनो निःस्पृहाश्चेतिभावः॥ कुलकम्॥१०॥

साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥११॥
तामगौरवभेदेन मुनींश्चापश्यदीश्वरः।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम्॥१२
तद्दर्शनादभूत्शम्भोर्भूयान् दारार्थमादरः।
क्रियाणां खलु धर्म्म्याणां सत्पत्न्यो मूलकारणम्॥१३

तेषामिति। तेषामृषीणां मध्यागता साध्वी पतिव्रता अतएव पत्युर्वशिष्ठस्य पादयोः अर्पितेक्षणा निविष्टदृष्टिः अरुन्धती साक्षात्प्रत्यक्षा तपः सिद्धिरिव तेषामेवेति शेषः। तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा। बहु भूयिष्ठं बभासे भातिस्म ॥ ११ ॥

तामिति। ईश्वरः भगवान् ताम् अरुन्धतीं मुनींश्च अगौरवभेदेन समानप्रतिपत्त्या अपश्यत् दृष्टवान्। नचायमविवेक इत्याह हि यस्मात् स्त्री पुमांश्चेत्येषा अनास्था स्त्रीपुंसभेदो न विवक्षितः किन्तु सतां साधूनां वृत्तं चरित्रमेव महितं पूज्यम्। गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयइति भावः ॥१२॥

तदिति। तद्दर्शनादरुन्धतीदर्शनात् शम्भोः दारार्थं दारपरिग्रहार्थम् आदरो भूयान् बहुतरः अभूत्। ननु दाराः कुत्रोपयुज्यन्तइत्यत्राह धर्म्म्याणां धर्म्मादनपेतानाम्। धर्म्मपथ्यर्थन्यायादनपेते इति

धर्म्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥१४॥
अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम् ।
इदमूचुरनूचानाःप्रीतिकण्टकितत्वचः ॥१५॥
यद्ब्रह्म सम्यगाम्नातंयदग्नौविधिनाहुतम् ।

यत्प्रत्ययः । क्रियाणामिज्यादीनां सतत्रः पतिव्रताः पतत्रः सत्यतत्रः । पत्युर्नो यज्ञसंयोगे इतिङीप् नकारश्च । मूलकारणं खलु ॥ १३ ॥

धर्म्मेणेति । धर्म्मेण दारसङ्ग्रिहचालक्षणेनापि कर्त्रा शर्वे ईश्वरे पार्व्वतीं प्रति पदं कारिते सति । हृक्रोरन्यतरस्यामिति शर्वस्याणिकर्त्तुः कर्म्मत्वम् । पूर्व्वापराधभीतस्य कामस्य मनः उच्छ्वसितं पुनरुज्जीवनावकाशोभवतीतिसप्रत्याशमभूदित्यर्थः ॥ १४ ॥

अथेति । अथ अनूचानाः साङ्गवेदप्रवक्तारः । अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यइत्यमरः । उपेयिवाननाश्वाननूचानश्चेति निपातः । प्रीत्या कण्टकिताः पुलकिताः त्वचोयेषान्ते तथोक्ताः । ते सर्वे मुनयः जगद्गुरुं हरं मानयित्वा पूजयित्वा इदं वक्ष्यमाणमूचुः ॥ १५ ॥

यदिति ॥ ब्रह्म वेदः । वेदस्तत्वं तपोब्रह्मेत्यमरः । सम्यक् नियमपूर्वकमाम्नातम् अधीतमिति यत् अग्नौ

यच्च तप्तं तपस्तस्य विपक्कं फलमद्य नः॥ १६॥
यदध्यच्चेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याविषयं मनोविषयमात्मनः ॥१७॥
यस्य चेतसि वर्त्तेथाः स तावत् कृतिनांवरः ।

विधिना कृतमिति यत् तपश्चान्द्रायणादिकं तप्तमिति च यद्, तस्य अध्ययनेनत्रातपोरूपस्य आश्रमत्रयसाध्यस्य कृत्स्नस्यापि कर्म्मणइतत्रयः। समुदायाभिप्रायकमेकवचनम् अन्यथा आवृत्तत्रान्वयप्रसङ्गात्। न च नपुंसकैकवद्भावः अनपुंसकेनेति नियमात्। फलं कार्य्यम् अद्य नोऽस्माकं विपक्कं सुनिष्पन्नमित्यर्थः। कर्म्मणि क्तः पचोव इति निष्ठातस्य वत्वम्॥१६॥

तदेवफलमाह ॥

यदिति। यद्यस्मात्कारणात् जगतामध्यक्षेण अधिपेन त्वया वयं मनोरथस्य अभिलाषस्य अविषयम् अगोचरम् आत्मनः स्वस्य मनोविषयं मनोदेशम् आरोपिताः प्रापिताः। तस्माद्विपक्कं फलमिति पूर्वेण सम्बन्धः। सकलजगदन्वेष्यस्य भगवतोऽपि वयमन्वेष्या भवामइति परमोत्कृष्टा वयमिति भावः ॥ १७ ॥

तदेवोपपादयति

यस्येति। यस्य जनस्य चेतसि वर्त्तेथाः येन स्मार्य्यसे

किंपुनर्ब्रह्मयोने यस्तव चेतसि वर्त्तते ॥१८॥
सतयमर्काच्च सोमाच्च परमध्यास्महेपदम्।
अद्यतूच्चैस्तरं ताभ्यांस्मरणानुग्रहात्तव ॥१९
त्वत्सम्भावितमात्मानं बहुमन्यामहे वयम्।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥२०॥

इत्यर्थः। स तावत् सएव कृतिनां वरः श्रेष्ठः। ब्रह्मणः वेदस्य वेधसो वा योनेः कारणस्य यद्वा वेदप्रमाणकस्य तव चेतसि यो वर्त्तते त्वया स्मर्य्यत इत्यर्थः। किम्पुनः स कृतिनां वरइति किमु वक्तव्यमित्यर्थः॥१८

सतयमिति। अर्कात् सूर्य्यात् सोमाच्चन्द्राच्च परम् उच्चैः पदं स्थानम् अध्यास्महे तिष्ठामः वयमिति शेषः सततम्। अधिशीङ्स्थासां कर्मेति कर्मत्वम्। अद्य तु तव कर्त्तुः स्मरणमेव अनुग्रहः प्रसादः तस्माद्धेतोः ताभ्यामर्केन्दुभ्याम् उच्चैस्तर मत्युच्चं पदम् अध्यास्महे इति सम्बन्धः। उच्चैस्तरमिति द्रव्यप्रकर्षत्वान्नामुप्रत्ययः॥ १९॥

त्वदिति। वयं त्वया सम्भावितं सत्कृतं त्वत्सम्भावितम् आत्मानम् आत्मस्वरूपं बहुअधिकं यथा तथा मन्यामहे। तथाहि उत्तमादरः सत्पुरुषकर्त्तृकः सत्कारः स्वगुणेषु विषये प्रायेण भूम्ना प्रत्ययं विश्वासम् आधत्ते जनयति। सर्व्वस्यापि महाजनपरिग्रहएव पूज्यताहेतुरित्यर्थः॥ २०॥

या नःप्रीतिर्विरूपाक्ष त्वदनुध्यानसम्भवा।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् २१
साक्षाद्दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा॥
प्रसीद कथयात्मानं न धियां पथि वर्त्तसे॥२२॥
किं येन सृजसि व्यक्तमुत येन बिभर्षि तत्।
अथ विश्वस्य संहर्त्ता भागः कतम एष ते ॥२३॥

येति। हे विरूपाक्ष त्वदनुध्यानसम्भवा त्वत्कर्त्तृकस्मरणजन्या नः अस्माकं या प्रीतिः सा प्रीतिः तुभ्यं किमावेद्यते किमर्थं निवेद्यते तथाहि देहिनां प्राणिनाम् अन्तरात्मा अन्तर्यामी असि। सर्वसाक्षिणा त्वया अस्मत्प्रीतिरनावेदिताऽपि ज्ञायतएव यतस्ततो न बुध्यबोधनं सम्भवतीति भावः॥ २१॥

साक्षादिति। हे देव साक्षात्प्रत्यक्षेण दृष्टोऽसि अञ्जसा पुन स्तत्वतस्तु त्वां वयं न विद्मः। दृश्यमानस्य रूपस्यातात्त्विकत्वादिति भावः। अतः प्रसीद अनुगृहाण आत्मानं निजस्वरूपं कथय। नचाकथितं तत्सुबोधमित्याह धियां बुद्धीनां पथि न वर्त्तसे अतः त्वयैव त्वद्रूपं कथनीयमित्यर्थः॥ २२॥

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्यमित्याह।

किमिति। हे देव एषः दृश्यमानः ते भागः मूर्त्तिः

अथवा सुमहतेऽषा प्रार्थना देव तिष्ठतु।
चिन्तितोपस्थितां स्तावत्शाधिनः करवाम किम्॥ २४॥

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः।
उपचिन्वन् प्रभां तन्वीं प्रत्याहपरमेश्वरः॥२५

किं येन भागेन व्यक्तं प्रपञ्चं सृजसि सः। यत्तदोर्नित्यसम्बन्धात्सर्व्वत्र तच्छब्दोऽध्याहार्य्यः। उत येन भागेन तद्व्यक्तं बिभर्षि पालयसि स वा। अथ यो भागः तस्य व्यक्तस्य संहर्त्ता स वा। किमाद्यः सन्देहे कतमः ब्रह्मविष्णुमहेश्वरेषु अयं कतमः भागः तदुच्यतामित्यर्थः॥ २३॥

ननु हरहतेऽव निश्चयात् कथमयम् संशयस्तत्राह।

अथ वेति। अथ वा हे देव सुमहती गुह्यतमत्वा दतिदुर्लभेत्यर्थः। एषा प्रार्थना निजरूपनिरूपणप्रार्थना तिष्ठतु। किन्तु चिन्तितेन चिन्तिता वा उपस्थिताः चिन्तितोपस्थिताः तान् नः अस्मान् तावत् शाधि आज्ञापय किं करवाम। प्रार्थनायां लोट्। अलमप्रस्तुतेन प्रस्तुते तान्नियुङ्क्ष्वेत्यर्थः॥ २४॥

अथेति। अथ परमेश्वरः मौलिगतस्य इन्दोः तन्वीम् अल्पां कलामात्रत्वादिति भावः। प्रभां कान्तिं विशदैः शुभ्रैः दशनांशुभिः उपचिन्वन् वर्द्धयन् प्रत्याह प्रत्युवाचेत्यर्थः॥ २५॥

विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः ।
ननु मूर्त्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः ॥ २६ ॥
सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥ २७ ॥
अत आहर्त्तुमिच्छामि पार्वतीमात्मजन्मने ।

विदित मिति । हे मुनयः काश्चिदपि मे प्रवृत्तयः व्यापाराः स्वार्था न भवन्ति यथा तथा वः युष्माकं विदितम् । वाक्यार्थः कर्म्म बुद्ध्यर्थत्वाद्वर्त्तमाने क्तः तद्योगात् षष्ठी । प्रवृत्तिपारार्थ्यप्रमाणमाह अष्टाभिः मूर्त्तिभिः इत्थम्भूत इमं प्रकारं परार्थप्रवृत्तिरूपं प्राप्तः । भू प्राप्ताविति धातोः कर्त्तरि क्तः । सूचितो ज्ञापितः अस्मि । मत्स्वमूर्त्तिचेष्टया पारार्थ्यमनुमेयमित्यर्थः ॥ २६ ॥

सइति । सः परार्थप्रवृत्तिरहं तृष्णातुरः चातकैः वृष्टिं विद्युत्वान् मेघइव अरिविप्रकृतैः शत्रुपीड़ितैः देवैः प्रसूतिं पुत्रोत्पादनं प्रति याचितः याचतेर्दुहादित्वात् अप्रधाने कर्म्मणि क्तः ॥ २७ ॥

अतइति । अतः सुरप्रार्थितत्वाद्धेतोः आत्मजन्मने पुत्राय पुत्रमुत्पादयितुमित्यर्थः । क्रियार्थोपपदस्येत्यादिना चतुर्थी । पार्वती यजमानः यष्टा पु-

उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥२८॥

तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः॥२९॥

उन्नतेन स्थितिमता धुरमुद्वहता भुवः।

ङ्यजोः शानन् इति शानन् प्रत्ययः। हविर्भोक्तुः अग्नेः उत्पत्तये अरणिम् अग्निमन्थनदारुविशेष-मिव। निर्मन्थ्यदारुणि त्वरणिर्द्वयोरित्यमरः। आहर्त्तुं संग्रहीतुम् इच्छामि॥ २८॥

तामिति। अस्मदर्थे अस्मत्प्रयोजने निमित्ते सति युष्माभिः तां पार्वतीं हिमालयः हिमवान् याचि-तव्यः। याचेर्दुहादित्वादप्रधाने कर्म्मणि तव्य प्रत्ययः। आवश्यक श्चैवदितत्राह सद्भिःसत्पुरुषैः अनुष्ठिताः सङ्घटिताः सम्बन्धाः यौनादयः विक्रियायै वैकल्यो-त्पादनाय न कल्पन्ते न पर्य्याप्नुवन्ति न समर्था इत्यर्थः। अलमर्थयोगाच्चतुर्थी॥ २९॥

न चाहं लौल्यात् स्त्रियमिच्छामि किन्तु देवो-पकाराय। यद्येवं निखिलदेवेषु विद्यमानेषु हिम-गिरेः शिलाभूतस्य कन्यापरिणयेच्छा कथमित्युक्ते स एव मे सावत्रसम्बन्धोऽत्रभवान् हिमवानित्याह।

उन्नतेनेति। उन्नतेन प्रांशुना प्रसिद्धेन च स्थिति-मता प्रतिष्ठावता भुवः धुरं भारमुद्वहता निर्व्वाहके-

तेनयोजितसम्बन्धं वित्तमामप्यवञ्चितम् ॥३०॥
एवं वाचः स कन्यार्थमिति वो नोपदिश्यते।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ३१॥
आर्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति।
प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता॥३२॥

णेत्यर्थः। तेन हिमवता योजितः सङ्घटितः सम्बन्धो यौनसम्बन्धो यस्य तं मामप्यवञ्चितम् अव्यामोहितं वित्त जानीत। विदज्ञाने इति धातोर्लोट् ॥ ३० ॥

तर्हि स किं वाच्य इत्याशङ्क्याह।

एवमिति कन्यार्थं कन्याप्रदानाय स हिमवान्। एवं वाच्य इति युष्मभ्यं नोपदिश्यते। कुतः हि यस्मात् साधवः विद्वांसः भवद्भिः प्रणीतं स्मृतिरूपेण निबद्धम् आचारम् आमनन्ति उपदिशन्ति। न हि स्वयमुपदेष्टारः परोपदेशमपेचन्त इत्यर्थः ॥ ३१ ॥

आर्येति। आर्या पूज्या अरुन्धत्यपि तत्र विवाहकृत्ये व्यापारं साहाय्य कर्तुम् अर्हति। तथाहि प्रायेण प्राचुर्येण एवंविधे कार्ये विवाहादिकार्ये दुर्घटे इत्यर्थः पुरन्ध्रीणां कुटुम्बिनीनाम्। स्यात्तु कुटुम्बिनी पुरन्ध्रिरित्यमरः। प्रगल्भता चातुर्यम्। स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमितिभावः ॥ ३२ ॥

ततप्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ॥ ३३ ॥
तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।
जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ॥ ३४ ॥
ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि सम्प्राप्तः प्रथमोद्दिष्टमास्पदम् ॥ ३५ ॥

तदिति । तत्तस्मात् कारणात् ओषधिप्रस्थं नाम हिमवत्पुरं हिमवन्नगरं सिद्धये कार्यप्रसिद्ध्यर्थं प्रयात गच्छत । अस्मिन् पुरोवर्त्तिनि महाकोशी नाम तत्रत्या काचिन्नदी तस्याः प्रपाते भृगावेव सा नदी यत्र पतति तस्मिन्नित्यर्थः । प्रपातस्तु तटो भृगुरित्यमरः । नः अस्माकं पुनः सङ्गमः अस्त्विति शेषः । भवत्समागम प्रतिपालयन्नहमिहैव निवत्स्यामीत्यर्थः ॥ ३३ ॥

तस्मिन्निति । संयमिनां योगिनां आद्ये तस्मिन्नीश्वरे परिणयोन्मुखे विवाहोत्सुके जाते सति प्रजापतेरिमे प्राजापत्याः ब्रह्मपुत्रा इत्यर्थः तपस्विनः मुनयः परिग्रहैः पत्नीभिः व्रीडां गार्हस्थ्यनिमित्तामित्यर्थः । पत्नीपरिजनादानमूलशापाः परिग्रहा इत्यमरः । जहुः तत्यजुः । जहातेर्लिटि रूपम् । नहि समान गुणदोषेषु व्रीडागमोऽस्तीति भावः ॥ ३४ ॥

ततः इति । ततः अनन्तरं मुनिमण्डलं मुनिस-

ते चाकाशमसिश्यामसुत्पत्य परमर्षयः।
आसेदुरोषधिप्रस्थं मनसा समरंहसः॥३६॥
अलकामतिवाह्यैव वसतिं वसुसम्पदाम्।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम्॥३७॥

मूहः परममितुरक्ता ओमितुरक्ता अनुमनेरत्यर्थः। अ-व्ययमेतत्। ओमेवं परमं मतमित्यमरः॥ प्रतस्थे। भगवान् ईश्वरोऽपि प्रथमोद्दिष्टं पूर्व्वसङ्केतितमास्पदं स्थानं महाकोशीप्रपातं सम्प्राप्तः॥ ३५॥

त इति। मनसा समरंहसः मनस्तुल्यवेगाः ते परमर्षयश्च। पूर्व्वश्लोकोक्तेश्वरसमुच्चयार्थश्चकारः। असिवच्छ्यामं नीलमाकाशं खंप्रति उत्पत्य ओष-धिप्रस्थं हिमवत्पुरम् आसेदुः सद्यःप्रापुरित्यर्थः।३६।

इतः परं दशभिः श्लोकैः औषधिप्रस्थमेव वर्णयति।

अलकामिति। वसुसम्पदां धनसम्पन्नानां वसतिं स्थानम् अलकां कुवेरनगरीमतिवाह्य परिच्छिद्येति यावत् उपनिवेशितमिव स्थितम्। तथा स्वर्गस्य अभिष्यन्दः अतिरेकः अतिरिक्तजनइति यावत्। तस्य वमनं निःसारणं कृत्वा उपनिवेशितमिव स्थितम्। उभयत्रापि कौटिल्यः भूतपूर्व्वमभूतपूर्व्वं वा जनपदं परदेशापवाहेन स्वदेशाभिष्यन्दवमनेन। निवेश-

गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि ।
बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥३८

जितसिंहभया नागा यत्राश्वा बिलयोनयः ।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः ॥३९

येदिति । अलकामरावत्यतिशयितसमृद्धिकमित्यर्थः ॥ ३७ ॥

गङ्गेति । गङ्गायाः स्रोतोभिः प्रवाहैः परिक्षिप्तं परिवेष्टितं तैरेव सपरिखमित्यर्थः । वप्रः चयः प्राकारचैत्यमिति यावत् । स्याच्चयो वप्रमस्त्रियामित्यमरः । तस्य अन्तः मध्ये ज्वलिताः प्रकाशमानाः ओषधयः यस्य तत्तथोक्तम् । ज्वलितौषधित्वाद्रात्रिषु सञ्चारिणां दीपनिरपेक्षमित्यर्थः । बृहन् विपुलः मणिशिलानां माणिक्यानां सालः प्राकारो यस्य तत्तथोक्तम् । प्राकारो वरणः सालइत्यमरः । अतएव गुप्तावपि सम्बरणेऽपि मनोहरम् अकृत्रिमदुर्गसंवरणमिति भावः ॥ ३८ ॥

जितेति । यत्र पुरे नागाः गजा जितं सिंहेभ्यो भयं यैस्तेतथोक्ताः सिंहाधिकवलाइत्यर्थः नाथस्तु पठं तुषारस्रुतिधौतरक्तम् इत्यत्रतद्विरोधभयात् वीत वीतभयाइति पपाठ । तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात् अत्र तु ओषधिप्रस्थगजानां हिमवन्महिम्ना सिंहातिरेकसम्भवेनाविरोधा-

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम्।
अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः ॥४०॥
यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः।
गृहयन्त्रपताकाश्रीरपौरादरनिर्म्मिता ॥४१॥

इति। वीतवीतेति पाठे वीतं विगतं वीतात् पादाङ्कुशकर्म्मभ्यां भयं येषां ते तथोक्ताः स्वभावविनीताइत्यर्थः। पादकर्म्म युतं प्रोक्तं यातमङ्कुशवारणम्। उभयं वीत माख्यातमिति यादवः। अश्वाः विलयोनयः विलसम्भवाः। अन्यत्र तु न तथेति वैचित्रम्। उक्तञ्च। अप्रताद्वाप्यतोवक्के वेदेभ्योऽण्डाच्च गर्भतः। साम्नोहयानामुत्पत्तिः सप्तधा परिकीर्त्तितेति। यक्षाः प्रसिद्धाः किम्पुरुषाः किन्नराश्च पौराः पुरजनाः। वनदेवताएव योषितः न तु मानुष्यइत्यर्थः॥ ३९॥

शिखरेति। यत्र पुरे शिखरेषु आसक्ताः मेघा येषान्तेषां वेश्मनां सम्बन्धिनः अनुगर्ज्जितानि प्रति गर्ज्जितानि तैः सन्दिग्धाः मुरजस्वनाः करणैः तालव्यवस्थापकैः ताड़नविशेषैः। तदुक्तं राजकन्दर्पेण। नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम्। संस्थानं ताड़नं रोधः करणानि प्रचक्षतेइति। व्यजयन्ते स्फुटी क्रियन्ते॥ ४०॥

यत्रेति। यत्र नगरे विलोलानि चञ्चलानि विट-

यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु ।
ज्योतिषांप्रतिविम्बानिप्राप्नुवन्त्युपहारतां॥४२

यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।
अनभिज्ञास्तमिस्राणांदुर्द्दिनेष्वभिसारिकाः॥४३

येषु अंशुकानि येषां तैः कल्पद्रुमैरेव अपौरादरेण पौरादरं विनैव निर्म्मिता अयत्नसिद्धेत्यर्थः । गृहेषु यानि यन्त्राणि आधारदारूणि तेषु पताकाः तासां श्रीः सम्भवतीति शेषः ॥ तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति सम्भाव्यन्त इत्यर्थः ॥ ४१ ॥

यत्रेति यत्र पुरे नक्तं रात्रौ स्फटिकहर्म्येषु आपानभूमिषु पानगोष्ठीप्रदेशेषु ज्योतिषां नक्षत्राणाम् प्रतिविम्बानि उपहारतां पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा प्राप्नुवन्ति ॥ ४२ ॥

यत्रेति । यत्र पुरे दुर्द्दिनेषु मेघच्छन्नदिवसेषु नक्तमोषधीनां तृणज्योतिषां प्रकाशेन सञ्चरन्ते एभिरिति सञ्चराः पन्थानः । गोचरसञ्चरेत्यादिना घप्रत्ययान्तोनिपातः । दर्शितसञ्चराः प्रकाशितमार्गाः अभिसारिकाः कान्तार्थिन्यः । कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेत्यमरः । तमिस्राणां तमसाम् । कृद्योगात्कर्म्मणि षष्ठी । अनभिज्ञा तमांसि नाभिजानन्तीत्यर्थः ॥ ४३ ॥

यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात्।
रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः ॥४४॥
भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः ॥४५॥

यौवनेति। यस्मिन् पुरे वयः यौवनान्तं यौवनावधिकं सर्वेष्वजराइत्यर्थः। तथा कुसुमायुधात्-कामात् अन्यइति शेषः। अन्तकः मृत्युर्नं अस्तीति शेषः। विरहिणां तादृग्दुःखोत्पादकत्वादन्तकत्वोपचारः। कामं विना मृत्युर्नास्तीत्यर्थः। अत-एव तत्कार्यभूतमरणाभावइत्याशयेनाह रतीति। रतिखेदसमुत्पन्ना निद्रा सुप्तिरेव संज्ञाविपर्यय-श्चेतनापगमः न तु दीर्घनिद्रारूपइत्यर्थः। अत्रत्याः सर्वे अजरामराइति श्लोकतात्पर्यार्थः। अन्तयति अन्तं करोतीत्यन्तकः। अन्तयतेस्तत्करोतीतिण्यन्तात् ण्वुल्प्रत्ययः ॥ ४४ ॥

भ्रूभेदिभिरिति। यत्र पुरे प्रियाः युवानः भ्रूभेदिभिः भ्रूभङ्गवद्भिः सकम्पा ओष्ठाः येषु तैः ललितानि अङ्गुलितर्जनानि येषु तैः स्त्रीणां कोपैः मानाख्यैः आप्रसादार्थिनः आप्रसादं प्रसादपर्यन्तम्। अर्थिनः याचकाः कृताः न तु मृत्युकोपैरिति भावः ॥ ४५ ॥

सन्तानकतरुच्छायासुप्तविद्याधराध्वगम्।
यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम्॥४६॥

कुलकम्।

अथ ते मुनयोदिव्याः प्रेक्ष्य हैमवतं पुरम्।
स्वर्गाभिसन्धिसुकृतंवञ्चनामिवमेनिरे ॥४७॥

सन्तानकेति। किञ्चेति चार्थः। सन्तानकतरोः छायासु सुप्ता विद्याधरा देवताविशेषाः तएव अध्वगाः यस्मिन् तत्तथोक्तम् गन्धवत् गन्धाढ्यं गन्धमादनं नाम गिरिः यस्य पुरस्य बहिर्भवं बाह्यम्। उपवनम् आरामः। अत्र गन्धवद्गन्धमादनमिति आगन्तुकः पाठः। प्राचीनपाठस्तुसुगन्धिर्गन्धमादन इति पुंलिङ्गान्तः। अतएव क्षीरस्वामिना गन्धमादनमनेत्र चेतत्रत गन्धेन मादयतीति गन्धमादनइति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यतइतत्राशयेनोक्तं सुगन्धिर्गन्धमादनइति कालिदास इति। सन्तानकतरुच्छायेतत्रत पूर्व्वपदार्थवाङ्कलत्रसम्भवेऽपि शलभच्छायम् इक्षुच्छायमितिवत् समर्थच्छायानिष्पत्तेस्तदपेक्षाभावात् छायाबाङ्कलेत्र इति नपुंसकत्वं नास्तीतत्रानुसन्धेयम् ॥ ४६ ॥

अथेति। अथ ते दिविभवाः दिव्याः मुनयः हिमवतइदं हैमवतं पुरं प्रेक्ष्य स्वर्गाभिसन्धिनो स्वर्गो

ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥४८॥
गगनादवतीर्णा सा यथावृद्धपुरःसरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥४९

इत्यनेन यत् सुकृतं ज्योतिष्टोमाद्यनुष्ठानं तत् स्वर्गाभिसन्धिसुकृतं वञ्चनां प्रतारणामिव मेनिरे। हिमवन्नगरमवेक्ष्य स्वर्गस्य पुण्यफलत्वं वदता वेदेन वयं विप्रलब्धा इत्यर्थः। स्वर्गादतिरमणीयमिति भावः॥ ४७॥

तद्विति। लिखितानलनिश्चलैः चित्रगतज्वलननिष्पन्दैरिति वेगप्रकर्षोक्तिः। जटाभारैरुपलक्षिताः ते मुनयः द्वारि तिष्ठन्तीति द्वाःस्थाः द्वारपालकाः। प्रतीहारे द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः इत्यमरः। उन्मुखैरूर्द्ध्वमुखैः द्वाःस्थैः वीक्षिताः सन्तः न तु विनिवारिता इत्यर्थः। गिरेः हिमवतः सद्मनि वेगादवतेरुः अवतीर्णवन्तः॥ ४८॥

गगनादिति। गगनात् अवतीर्णा अवरूढा यथावृद्धं वृद्धानुक्रमेण स्थिताः पुरःसराः अग्रेसराः यस्यां सा तथोक्ता। अनुपसर्जनाधिकारात् न ङीप्। सा मुनिपरम्परा मुनिपङ्क्तिः तोयान्तः तोयाभ्यन्तरे। भास्करालो प्रतिविम्बितार्कपङ्क्तिरिव रेजे। एतेन मुनीनां तेजस्वित्वेऽपि सुखसन्दर्शनं सूचयति। भास्कराणां भूयिष्ठत्वसम्भावनार्थं तोया-

तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः
नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥५०

धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥५१

न्तरितुत्वक्रम्। अतएव वज्रत्वसिद्धिश्च ॥ ४९ ॥

तानिति। गिरिः हिमवान् अर्घ्यम् अर्घार्थं जलम् आदाय सारगुरुभिः अन्तःसारदुर्भरैः पादन्यासैः वसुन्धरां नमयन् अधः प्रापयन्। अर्घमर्हन्तीत्यर्घ्यान् पूजार्हान्दण्डादित्वाद्यत्प्रत्ययः। तान् मुनीन्दूरात् प्रत्युद्ययौ ॥ ५० ॥

सम्प्रति हिमवन्तमेव जङ्गमस्थावररूपद्वयसाधारणैर्विशेषणैर्विशिनष्टि।

धात्विति। धातुवत्ताम्रोऽधरो यस्य स तथोक्तः। अन्यत्र धातुरेव ताम्रोऽधरो यस्य। प्रांशुरुन्नतः उभयत्रापि समानम्। देवदारुवद्बृहन्तौ भुजौ यस्य स तथोक्तः देवदारव एव बृहन्तौ भुजौ यस्य अन्यत्र। प्रकृत्या स्वभावेनैव शिलावदुरो यस्य स शिलोरस्कः शिलैवेत्यन्यत्र। उरः प्रभृतिभ्यः कप् इति कप्। अतः हिमवानिति सुव्यक्तः वर्त्तमाने क्तः। स तत्र स एवायं हिमवानिति तद्धर्मप्रत्यभिज्ञानादवधारित इत्यर्थः ॥ ५१ ॥

विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः ॥५२॥
तत्र वेत्रासनासीनान् कृतासनपरिग्रहः।
इत्युवाचेश्वरान् वाचं प्राञ्जलिर्भूधरेश्वरः॥५३
अपमेघोदयं वर्षमदृष्टकुसुमं फलम्।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे॥५४

विधेति। स हिमवान् विधिना शास्त्रेण प्रयुक्तसत्कारैः कृतार्चनैः शुद्धकर्मभिः अदुष्टचरितैः शुद्धान्तप्रवेशार्हैरितत्यर्थः। तैर्मुनिभिः स्वयं मार्गस्य दर्शयतीति दर्शकः दर्शयिता सन्। पश्यते र्ण्यन्तात् ण्वुल्प्रत्ययः। शुद्धान्तमन्तःपुरम् आक्रमयामास प्रवेशयामासेतत्यर्थः। अत्र क्रमेरगत्यर्थत्वाद्गति बुद्धीत्यादिना तैरित्यस्य न कर्मत्वम् ॥ ५२ ॥

तत्रेति। वेत्रं लताविशेषः। तत्र शुद्धान्ते वेत्रासनासीनान् वेत्रमयविष्टरोपविष्टान् ईश्वरान् प्रभून् मुनीन् भूधरेश्वरः हिमवान् कृतासनपरिग्रहः उपविष्टः सन्नित्यर्थः। प्राञ्जलिः कृताञ्जलिः सन् इत्येवं वाचम् उवाच ॥ ५३ ॥

अपेति। अतर्कितोपपन्नम् अविचारितमेवोपगतम् अत्यन्तासम्भावितमित्यर्थः। वः युष्माकं दर्शनम् अपमेघोदयं वर्षम् अनभ्रा वृष्टिः तथा अदृष्टं कुसुमं

मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥५५॥
अद्य प्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥५६॥

यस्य तत्तयोक्तं फलञ्च तत् मे प्रतिभाति । अतिदुर्लभलाभः संवृत्तइत्यर्थः ॥ अत्र मेघोदय कुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्यत्रयोरुदयाभिधानात् विभावना । मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणाद्रूपकालङ्कारश्चेतुत्रभयोः संसृष्टिः ॥ ५४ ॥

मूढमिति । भवदनुग्रहादात्मानं मां मूढं बुद्धमिव मूढोभूत्वा वः बुद्धवान् तमिव कर्त्तरि क्तः । आयसमयोविकारं हैमीभूतम् आयसत्वं विहाय सौवर्णत्वं प्राप्तमिवेत्यर्थः । भूमेः भूलोकात् दिवं स्वर्गमारूढमिव मनेत्र । ज्ञान रूपस्थानानि अद्य मे परमुत्सृष्यन्त इति भावः ॥ ५५ ॥

अद्येति । अद्य प्रभृति इतआरभ्य भूतानां प्राणिनां शुद्धये अधिगम्योऽस्मि शुद्ध्यर्थिनां तीर्थभूतोऽस्मीतत्रर्थः । भवदागमनादिति शेषः । हि यस्मात् यत् अर्हद्भिः सद्भिः अध्यासितम् अधिष्ठितं जुष्टमिति यावत् । तत्तीर्थं प्रचक्षते । निपानागमयोस्तीर्थमृषिजुष्टजले गुरावितत्रमरः ॥ ५६ ॥

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः।
मूर्द्धि गङ्गाप्रपातेन धौतपादाम्भसा च वः॥ ५७
जङ्गमं प्रैष्यभावे वः स्थावरं चरणाङ्कितम्।
विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः॥ ५८॥
भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते।

अवैमीति। हे द्विजोत्तमाः आत्मानं मां द्वयेनैव पूतं शुद्धम् अवैमि अवगच्छामि। केन द्वयेन मूर्ध्नि गङ्गाप्रपातेन मन्दाकिनीपातेन वः युष्माकं धौतयोः चालितयोः पादयोरम्भसा च। अत्र गङ्गाजलवत्पादाम्भसः पावनत्वमितरौपम्यं गम्यते तच्च प्रस्तुताप्रस्तुतयोरिति दीपकालङ्कारः। प्रियः प्रियतराख्यानमिति लक्षणात् प्रियोऽलङ्कार इति केचित्॥ ५७॥

जङ्गममिति। हे मुनयः द्विरूपं जङ्गमस्थावरात्मकत्वात् द्विप्रकारकमपि मेवपुः विभक्तानुग्रहं विभजनकृतप्रसादं मन्ये। कुतः जमङ्गं वपुः वो युष्माकं प्रैष्यभावे कैङ्कर्य्ये स्थितमिति शेषः। प्रादूढोढेत्रषैष्येषु वृद्धिर्वक्तव्येति वृद्धिः। नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारका इत्यमरः। स्थावरं वपुः चरणाङ्कितम्। अयमेव हि महाननुग्रहो दासजनस्य यत्कर्म्मसु नियोजनं मूर्द्धनि पादन्यासश्चेति तात्पर्य्यार्थः॥ ५८॥

अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥५९॥
न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥६०॥
कर्त्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते ।
मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥६१॥

भवदिति । व्याप्ता दिगन्ता यैस्तानि व्याप्तदिगन्तानि महान्त्यपीत्यर्थः । मे मम अङ्गानि भवत्सम्भावनोत्थाय युष्मदनुग्रहजन्याय मूर्च्छते व्याप्नुवते परितोषाय न प्रभवन्ति न पर्य्याप्नुवन्ति । अलमर्थयोगाच्चतुर्थी । यथा महत्स्वपि मद्गात्रेषु न भाति तथा मे हर्षोवर्द्धत इत्यर्थः ॥ ५९ ॥

नेति । भास्वतां तेजस्विनां विवस्वताञ्च वः युष्माकं दर्शनेन केवलं दरीसंस्थं गुहागतं तमः ध्वान्तरूपमेव नापास्तं किन्तु मे अन्तर्गतम् अन्तरात्मगतं रजसः रजोगुणात् परम् अनन्तरम् तमः अज्ञानरूपमपि अपास्तम् । रजस्तु पादन्यासैरेवापास्तमिति भावः । प्रसिद्धैः भास्वद्भिः बाह्यं तमोऽपास्यते एभिस्त्वान्तरमपि इति व्यतिरेकोऽभिव्यज्यते ॥ ६० ॥

कर्त्तव्यमिति । कर्त्तव्यं कार्य्यं वः युष्माकं न पश्यामि निस्पृहत्वादिति भावः । अथ स्याच्चेत् विद्येत यदि किं नोपपद्यते किंनाम न सम्भवति सर्व्वं सुलभमेवेत्यर्थः । अथ वा किमत्र प्रयोजनचिन्तयेत्याह

तथापि तावत् कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादाहि किङ्कराःप्रभविष्णुषु ॥६२॥
एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्य्यमनास्था वाह्यवस्तुषु॥६३
इत्यूचिवांस्तमेवार्थं गुहामुखविसर्पिणा ।

मत्पावनाय मच्छोधनायैव भवतामिह विषये प्रास्थानम् इमं देशमुद्दिश्य इदं प्रयाणमित्यर्थः मन्ये तर्कयामि ॥ ६१ ॥

तथापीति । तथापि भवतां निस्पृहत्वेऽपि कस्मिंश्चित्कर्म्मणीतिशेषः । आज्ञाम् इदं कुर्व्वित्यादेशं तावदिदानीं मे मह्यं दातुम् अर्हथ मदनुग्रहबुद्धेरिति भावः । हि यस्मात्किङ्कराः भृत्याः प्रभवन्तीति प्रभविष्णुषु प्रभुषु विषये । भुवश्च इतीष्णुच् प्रत्ययः । विशेषेण नियोगः विनियोगः प्रेषणमेव प्रसादः अनुग्रहः । येषां ते तथोक्ताः । अन्यथा स्वस्वामिभावो निष्फल इतिभावः ॥ ६२ ॥

एत इति । किं बहुना एते वयम् अमी दाराः इयं कुलस्य जीवितं प्राणभूता परमप्रेमास्पदमित्यर्थः कन्या अत्र एषां मध्ये येन जनेन वः कार्यं प्रयोजनं ब्रूत तमिति शेषः । येन सोऽपि दीयत इति भावः । रत्नहिरण्यादिकन्तु न मे गण्यमित्याह । वाह्यवस्तुषु

द्विरिवप्रतिशब्देन व्याजहार हिमालयः॥६४॥
अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम्॥६५॥
उपपन्नमिदं सर्वमतः परमपि त्वयि।

कनकरत्नादिषु अनास्था अनादरः। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। अदेयं न किञ्चिदस्तीति भावः॥ ६३॥

इतीति। इत्युच्चिवान् उक्तवान्। वचेः क्वसुप्रत्ययः। हिमालयः हिमवान् गुहानां मुखेषु विवरेषु विसर्पतीति तथोक्तेन प्रतिशब्देन तं पूर्व्वोक्तमेवार्थं द्विः द्विवारम्। द्वित्रिचतुर्भ्यः सुजिति सुच्प्रत्ययः। व्याजहार वभाषे॥ ६४॥

अथेति। अथ अनन्तरम् ऋषयः उदाहरणानि कथाप्रसङ्गाः तएव वस्तूनि अर्थाः तेषु अग्रं नयतीत्यग्रणीः तम् अग्रण्यं प्रगल्भम्। सत्सु द्विषेत्यादिना क्विप्। अग्रग्रामाभ्यां नयतेरिति वक्तव्यमिति णत्वम् अङ्गिरसं नाम ऋषिं नोदयामासुः प्रतिवक्तुं प्रेरयामासुः सोऽङ्गिराः भूधरं हिमवन्तं प्रत्युवाच॥ ६५॥

उपपन्नमिति। इदम् एते वयममी दारा इत्याद्युक्तं सव्वम् अतः परम् अतोऽधिकमपि त्वय्युपपन्नं युज्यते। तथाहि ते मनसः शिखराणाञ्च समुन्नतिः

मनसः शिखराणाञ्च सदृशीते समुन्नतिः ॥६६॥
स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि ते।
चराचराणां भूतानां कुक्षिराधारतांगतः॥६७॥
गामधास्यत्कथं नागो मृणालमृदुभिः फणैः।
आरसातलमूलात्त्वमवालम्बिष्यथा न चेत्॥६८

सदृशी शिखराणीव मनो महोन्नतमित्यर्थः। किन्नाम दुष्करमुन्नतचित्तानामिति भावः। प्रस्तुताप्रस्तुतयो र्मनः शिखरयोरौपम्यस्य गम्यत्वाद्दीपकालङ्कारः ॥ ६६ ॥

स्थान इति। त्वां स्थावरात्मानं स्थावररूपिणं विष्णुमाहुः। स्थावराणां हिमालय इति गीतावचनात्। स्थाने युक्तम्। युक्तार्थे अव्ययतेतत्। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। तथाहि ते तव कुक्षिः चराचराणां जङ्गमस्थावररूपिणां भूतानां पृथिव्यादीनाम् आधारतां गतः। तवैव विष्णोः कुक्षिरेवंभूत इति भावः ॥ ६७ ॥

गामिति। नागः शेषाहिः मृणालमृदुभिः बिसकोमलैः फणैः गां भुवं कथम् अधास्यत् धारयेत् त्वम् आरसातलमूलात् पातालपर्यन्तम्। विकल्पादसमासः। नावालम्बिष्यथाश्चेत् पादै र्नावलम्बेथा यदि। त्वदवलम्बनादेव भुजगराजोऽपि भुवं बिभ-

अच्छिन्नामलसन्तानाः समुद्रोर्म्यनिवारिताः ।
पुनन्ति लोकान् पुण्यत्वात् कीर्त्तयः सरितश्च ते ॥६९॥
यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ॥७०॥
तिर्य्यगूर्द्ध्वमधस्ताच्च व्यापको महिमा हरेः ।

त्तीत्यर्थः । अत्र क्रियातिपत्त्यभावात् लृङ् प्रयोगश्चिन्त्यः ॥ ६८ ॥

अच्छिन्नेति । अच्छिन्नाः अविच्छिन्नाः अमलाश्च सन्तानाः प्रबन्धाः प्रवाहाश्च यासान्ताः तथोक्ताः समुद्रोर्म्मिभिः अनिवारिताः पारगमनादन्तः प्रवेशाच्चेति भावः । ते तव कीर्त्तयः सरितश्च गङ्गादयः पुण्यत्वात् पवित्रत्वात् लोकान् पुनन्ति पावयन्ति । लोकपावनाः खलु पुण्यश्लोका इति भावः । केवल प्रकृतविषयस्तुल्ययोगितालङ्कारः ॥ ६९ ॥

यथेति । गङ्गाभागीरथी प्रभवत्यस्मादिति प्रभवः तेन कारणेन परमे तिष्ठतीति परमेष्ठिनो विष्णोः । परमे कित् इति प्रत्ययः । तत्पुरुषे कृति बहुलमिति अलुक् । परमेवर्ह्वि दिव्यग्निभ्यःस्थः इति षत्वम् । पादेन चरणेन यथैव श्लाघ्यते प्रशस्यते तथैव द्वितीयेन प्रभवेन उच्छिरसा त्वया श्लाघ्यते हरिचरणवत् तीर्थस्यापि तीर्थभूतस्त्वमिति भावः ॥ ७० ॥

विविक्रमोद्यतस्यासीत्तत्तु स्वाभाविकस्तव ॥७१॥
यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥७२॥
काठिन्यं स्थावरे काये भवता सर्वमर्पितम् ।
इदन्तु ते भक्तिनम्रं सतामाराधनं वपुः ॥७३॥

तिर्यगिति । तिर्यगूर्द्ध्वमधस्ताच्च व्यापकः सर्व्वव्यापीत्यर्थः । महिमा महत्त्वं हरेर्विष्णोः त्रिषु विक्रमेषु उद्यतस्य सतः आसीत् । विक्रमोद्यतस्यापि कदाचिदेव न तु सर्व्वदेत्यर्थः । तव तु व्यापको महिमा स्वाभाविको नित्यसिद्ध इत्यर्थः ॥ ७१ ॥

यज्ञेति । यज्ञभागभुजाम् इन्द्रादीनां मध्ये-पदम् आतस्थुषा निहितवता त्वया उच्चैरुन्नतं हिरण्यस्य विकारः हिरण्मयम् । दाण्डिनायनहास्तिनायनेत्यादिना निपातनात् साधु । सुमेरोः शृङ्गं शिखरं प्राधान्यञ्च ध्वन्यते । शृङ्गं प्राधान्यसान्वोश्चेत्यमरः । वितथीकृतं व्यर्थीकृतं तस्य यज्ञभागाभावादिति भावः । अस्य तु तत् सद्भावे प्रमाणं हिमवतोऽस्तीति श्रुतिः ॥ ७२ ॥

काठिन्यमिति । भवता सर्व्वं काठिन्यम् अनम्रत्वमित्यर्थः । स्थावरे स्थिरे काये शिलामय इत्यर्थः । अर्पितं न्यस्तम् । सताम् अर्हताम् आराधनं पूजासाधनं ते इदं वपुस्तु जङ्गममित्यर्थः भक्तिनम्रे काठि-

तदागमनकार्यं नः शृणु कार्यं तवैव तत्।
श्रेयसामुपदेशात्तु वयमत्रांशभागिनः॥७४॥
अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम्।
शब्दमीश्वरइत्युच्चैःसार्द्धचन्द्रं बिभर्त्ति यः॥७५
कल्पितान्योन्यसामर्थ्यैःपृथिव्यादिभिरात्मभि।

न्यत्तेभ्योऽप्यत्र नास्ति अन्यया नम्रत्वासम्भवादित्यर्थः। तथाचासाधारण्यं ध्वन्यते॥ ७३॥

तदिति। तत्तस्मात् नः अस्माकम् आगमनस्य कार्य्यंञ्च प्रयोजनं शृणु तत्कार्य्यञ्च तवैव न त्वस्माकमित्यवधारणार्थ एवकारः। वयन्तु श्रेयसाम् उपदेशादत्र कार्य्ये अंशभागिनः। त्वमेवात्र फलभाक् वयमुपदेष्टार इति भावः॥ ७४॥

कार्य्यमेवाह अणिमेत्यादिना।

अणिमेति। यः शम्भुः अणिमादिगुणोपेतम् अणिमादिभिरष्टभिर्गुणैः वाच्यभूतैरुपेतम् अष्टैश्वर्य्य वाचकमित्यर्थः। अतएव अस्पृष्टं पुरुषान्तरं येन तं तथोक्तं पुरुषान्तरस्यानभिधायकं तस्यैव एवं गुणत्वादित्यर्थः। उच्चैः सर्वोन्नतम् ईश्वर इति शब्दं निरुपपदेश्वरशब्दमित्यर्थः। सार्द्धचन्द्रम् अर्द्धचन्द्रयुक्तं अर्द्धचन्द्रश्च तद्यर्थः विभर्त्तिः॥ ७५॥

कल्पितेति। येन शम्भुना कल्पितं धृतिसंग्रहादिस्वगुणसम्पादितम् अन्योन्यसामर्थ्यंञ्च परस्पर सह-

येनेदं ध्रियते विश्वं धुर्य्यैर्यानमिवाध्वनि ॥ ७६ ॥
योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्त्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्म्मनीषिणः ॥ ७७ ॥
स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्म्मणाम् ।
वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः ॥ ७८ ॥

कारखूपं ये त्वयोक्ताः । स्वस्वरूपसामर्थ्यात् अन्योन्याधेयमेवेति भावः । पृथिव्यादिभिरात्मभिरष्टाभि मूर्त्तिभिरित्यर्थः । इदं व्यक्तं विश्वं धुरं वहन्तीति धुर्य्यैः अश्वैः । धुरो यड्ढकाविति यत् प्रत्ययः । अध्वनि यानं रथइव ध्रियते ॥ ७६ ॥

योगिन इति । योगिनः अध्यात्मवेदिनः क्षेत्राभ्यन्तरवर्त्तिनं शरीरान्तश्चरं सर्वभूतान्तर्यामिनं परमात्मस्वरूपिणमित्यर्थः । क्षेत्रं पत्नीशरीरयोरित्यमरः यं शम्भुं विचिन्वन्ति मृगयन्ते । मनीषिणः विद्वांसः यस्य शम्भोः पदं स्थानम् अविद्यमानम् आवृत्तेः पुनः संसारापत्तेः भयं यत्र तत्तथा भूतम् आहुः ॥ ७७ ॥

सइति । विश्वस्य जगतः कर्म्मणां साक्षी द्रष्टा । साक्षाद् द्रष्टरि संज्ञायामिति इनि प्रत्ययः । वरान् इष्टान् ददातीति वरदः । आतोऽनुपसर्गेकः इति क प्रत्ययः । स पूर्वोक्तः शम्भुः अस्मत् सङ्क्रामितैः पदैः अस्मासु निवेशितै वाक्यैः ते दुहितरं साक्षात् वृणुते अस्मन्मुखेन स्वयमेव याचत इत्यर्थः ॥ ७८ ॥

तमर्थमिव भारत्या सुतया योक्तुमर्हसि।
अशोच्या हि पितुः कन्या सद्भर्त्तृप्रतिपादिता॥७९
यावन्त्येतानि भूतानि स्थावराणि चराणि च।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता॥८०
प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम्।
चरणौ रञ्जयन्त्वस्याश्चूड़ामणिमरीचिभिः॥८१

तमिति। तं शम्भुं भारत्या वाचा अर्थमभिधेयमिव सुतया दुहित्रा योक्तुं सङ्घटयितुम् अर्हसि अत्र वागर्थयोः उपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित इत्युक्तम् वागर्थाविव सम्पृक्ताविति। तथाहि सद्भर्त्तृ प्रतिपादिता दत्ता कन्या पितुः अशोच्या॥ ७९॥

गुणान्तरमप्याह।

यावन्तीति। स्थावराणि चराणि च यावन्त्येतानि भूतानि सन्तीति शेषः। सर्वाणि भूतानीत्यर्थः एनां ते दुहितरं मातरं कल्पयन्तु। हि यस्मात् ईशः जगतः पिता। पितृदारेषु मातृभावो न्याय्य इति भावः॥ ८०॥

प्रणमेयति। विबुधा देवाः शितिकण्ठाय शिवाय प्रणम्य तदनन्तरं नीलकण्ठप्रणामानन्तरम् अस्याश्चरणौ चुड़ामणिमरीचिभिरञ्जयन्तु ईश्वरपरिग्रहादखिलदेवतावन्द्या भवत्वित्यर्थः॥ ८१॥

उमावधूर्भवान् दाता याचितार इमे वयम्।
वरः शम्भुरलं ह्येषत्वत्कुलोद्भूतयेविधि॥८२॥
अस्तोतुःस्तूयमानस्य वन्द्यस्यानन्यवन्दिनः।
सुतासम्बन्धविधिनाभवविश्वगुरोर्गुरुः॥८३॥
एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्व्वती॥८४॥

उमेति। उमा वधूः भवान् दाता इमे वयं याचितारः प्रार्थकाः शम्भुः वरः वोढ़ा एषः विधिः एवा सामग्री त्वत्कुलस्य उद्भूतये उत्कर्षाय अलं पर्य्याप्तं हि नमः स्वस्तिस्वाहास्वधेत्यादिना चतुर्थी॥ ८२॥

अस्तोतुरिति। स्वयमन्यस्तोता न भवतीत्यस्तोतुः किन्तु स्तूयमानस्य सर्वैस्तुतस्य वन्द्यस्य जगद्वन्द्यस्य स्वयमन्यं न वन्दतइत्यनन्यवन्दिनः विश्वगुरोः देवस्य सुतासम्बन्धविधिना यौनसम्बन्धाचरणेन गुरुर्भव। यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्ता इत्यर्थः॥ ८३॥

एवमिति। देवर्षौ अङ्गिरसि एवं वादिनि सति पार्व्वती पितुः पार्श्वे अधोमुखी सती लज्जयेतिशेषः। लीलाकमलपत्राणि गणयामास सञ्चख्यौ। लज्जावशात् कमलदलगणनाव्याजेन हर्षं जुगोपेत्यर्थः। अनेन अवहित्याख्यः सञ्चारी भाव उक्तः। तदुक्तम्।

शैलः सम्पूर्णकामोऽपिमेनामुखमुदैक्षत।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः॥८५॥
मेने मेनापि तत्सर्वं पत्युःकार्यमभीप्सितम्।
भवन्त्यव्यभिचारिण्यो भर्त्तुरिष्टे पतिव्रताः॥८६॥
इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः।
आददे वचसामन्ते मङ्गलालंकृतां सुताम्॥८७

अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनमिति॥८४॥

शैलइति। शैलः हिमवान् सम्पूर्णकामोऽपि दातुं कृतनिश्चयोऽपीत्यर्थः। मेनामुखम् उदैक्षत उचितोत्तरजिज्ञासयेति भावः। तथा हि प्रायेण कुटुम्बिनः गृहस्थाः कन्यार्थेषु कन्याप्रयोजनेषु गृहिण्येव नेत्रं कार्यज्ञानकारणं येषान्ते तथोक्ताः कलत्रप्रधानवृत्तय इत्यर्थः॥ ८५॥

मेने इति। मेनापि पत्युर्हिमालयस्य तत्सर्वम् अभीप्सितं कार्यं मेने अङ्गीचकार। तथा हि पतिरेव व्रतं यासां ताः भर्त्तुः इष्टेऽभीप्सिते न विद्यते व्यभिचारो यासां ताः अव्यभिचारिण्यो भवन्ति भर्तृचित्ताभिप्रायज्ञा भवन्तीति भावः॥ ८६॥

इदमिति। स हिमवान् वचसामन्ते मुनिवाक्यावसाने अत्र मुनिवाक्ये इदमुत्तरश्लोके वक्ष्यमाणं दानमेव न्याय्यं न्यायादनपेतमुत्तरमिति बुद्ध्या

एहि विश्वात्मने वत्से भिक्षासि परिकल्पिता।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥८८॥
एतावदुक्त्वा तनयामृषीनाह महीधरः।
इयं नमति वः सर्वान् त्रिलोचनबधूरिति ॥८९॥
ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः।

चित्तेन विमृश्य विचिन्त्य मङ्गलं यथा तथा अलङ्कृतां मङ्गलालङ्कृतां सुताम्। आददे हस्ताभ्यां जग्राह ॥८७

एहीति। हे वत्से। पुत्रि एहि आगच्छ त्वं विश्वात्मने शिवाय भिक्षा परिकल्पितासि निश्चितासि। रत्नादिलब्धपर्य्यन्तं सर्वं भिक्षा तपस्विन इतिवचनादितिभावः। अर्थिनो याचितारो मुनयः मया गृहमेधिनो गृहस्थस्य फलं प्राप्तम्। इह परत्र च तारकत्वात् पात्रे कन्यादानं गार्हस्थ्यस्य फलमित्यर्थः ॥ ८८ ॥

एतावदिति। महीधरः हिमवान् तनयाम् एतावत् पूर्व्वोक्तम् उक्त्वा ऋषीनाह किमिति इयं त्रिलोचनबधूः त्र्यम्बकपत्नी वः सर्व्वान् नमतीति। त्रिलोचनबधूरिति सिद्धवदभिधानेन प्रतिपन्नं दानमिति सूचयति ॥ ८९ ॥

ईप्सितेति। ते मुनयः ईप्सितार्थक्रियया इष्टार्थकरणेन उदारं महत्। उदारो दातृमहतोरित्यमरः।

आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ९०
तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ।९१।
तन्मातरञ्चाश्रुमुखीं दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ।९२।

गिरेः हिमवतः वचः वचनम् अभिनन्द्य साध्विति । संस्तुत्य अम्बिकामम्बां पच्यतइति पाकः फलं पुरःपाकाभिः पुरस्कृतफलाभिः आशीर्भिः आशीर्वादैः एधयामासुः संवर्द्धयामासुः ॥ ९० ॥

तामिति । प्रणामादरेण नमस्कारसक्त्या स्रस्ते जाम्बूनदे सुवर्णविकारे वतंसके कनककुण्डले यस्यास्तां लज्जमानां ताम् अम्बिकाम् अरुन्धती अङ्कम् आरोपयामास । रुहः पोऽन्यतरस्यामिति । पकारः ॥९१॥

तदिति । दुहितृस्नेहेन पुत्रिकाप्रेम्णा विक्लवां वियोक्ष्यतइति भीताम् अतएव अश्रूणि मुखे यस्यास्ताम् अश्रुमुखीं तस्या अम्बिकायाः मातरं तन्मातरं मेनाञ्च अन्या पूर्वं यस्यास्ति सोऽन्यपूर्वः । सर्वणाम्नो वृत्तिविषये पुंवद्भाव इति पूर्वपदस्य पुंवद्भावः स न भवतीत्यनन्यपूर्व्वः तस्य अनन्यपूर्व्वस्य सापत्न्यदुःखमकुर्वतइत्यर्थः । वरस्य वोढुः गुणैः मृत्युञ्जयत्वादिभिः विशोकां निर्दुःखामकरोत् ॥ ९२ ॥

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना।
ते त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः॥ ९३

ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम्।
सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥ ९४

पशुपतिरपि तान्यहानि कृच्छ्रा-
दगमयदद्रिसुतासमागमोत्कः।

वैवाहिकीमिति। चीरपरिग्रहा वल्कलमात्रवसनास्ते तपस्विनः तत्क्षणं तस्मिन्नेव क्षणे हरबन्धुना हिमवता वैवाहिकीं विवाहयोग्यां तिथिं पृष्टाः केत्यनुयुक्ताः सन्तः त्रयाणामह्नां समाहारस्त्र्यहः। तद्धितार्थोत्तरपदसमाहारे चेति समासः। राजाहःसखिभ्यष्टजिति टच् प्रत्ययः द्विगुत्वादेकवचनम्। रात्राह्नाहाः पुंसीति पुंलिङ्गता। तस्माद् त्र्यहादूर्ध्वम् उपरि आख्याय चतुर्थेऽहनि विवाह इत्युक्त्वा चेरुश्चलिता॥ ९३॥

त इति। ते मुनयः हिमालयम् आमन्त्र्य साधु याम इत्यापृच्छ्य पुनः शूलिनं हरं सङ्केतस्थानस्थं प्राप्य सिद्धं निष्पन्नमर्थं प्रयोजनं तस्मै निवेद्य ज्ञापयित्वा च तद्विसृष्टाः तेन शूलिना विसृष्टाः खमाकाशं प्रति उद्ययुः उद्येतुः। अत्र सङ्क्षिप्तार्थाभिधा-

कमपरमवशं न विप्रकुर्यु-
र्विभुमपि तं यदमी स्पृशन्ति भावाः ॥६५॥

नात् सङ्क्षेपोनाम गुण उक्तः तदुक्तं सङ्क्षिप्तार्थाभिधानं यत् सङ्क्षेपः परिकीर्त्तित इति ॥ ६४ ॥

भगवान् पशुपतिः त्र्यहमात्रविलम्बमपि सोढ़ुं न शशाक तदौत्सुक्यादित्याह ।

पशुपतिरिति । उत्कं मनो यस्य सः उत्कः । उत्क उन्मना इति निपातः । अद्रिसुतासमागमोत्कः पार्वतीपरिणयोत्सुकः पशुपतिरपि तानि त्रीणीति-शेषः अहानि कच्छादगमयत् अयापयत् । कवि-राह अमी भावाः औत्सुक्यादयः सञ्चारिणः अव-शम् इन्द्रियपरतन्त्रम् अपरं पृथग्जनं कं नविप्रकुर्युः न विकारं नयेयुः। यद्यस्मात् विभुं समर्थं जितेन्द्रिय-मिति यावत् तं स्मरहरमपि स्पृशन्ति विकुर्व्वन्ती-त्यर्थः। अत्र किमुविकार समर्थनादर्थादितरजनविकार कैमुतिकन्यायादापततीत्यर्थापत्तिरलङ्कारः। तथा च सूत्रं दण्डापूपिकयार्थान्तरपतनमर्थापत्तिरिति । अर्थान्तरन्यास इति केचित् तदुपेक्षणीयं युक्तिस्तु विस्तरभयान्नोच्यते। पुष्पिताग्रावृत्तम्। अयुजि न युगरफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेत लक्षणात् ॥ ६५ ॥

इतिश्रीकालिदासकृतौकुमारसम्भवेमहाकाव्ये
उमाप्रदानोनाम षष्ठः सर्गः ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथ
सूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनी
समाख्यायां षष्ठः सर्गः ।

——o——

## सप्तमः सर्गः ॥

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया
विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥

अथेति । अथ तदनन्तरं हिमवान् ओषधीनामधिपस्य चन्द्रस्य वृद्धौ शुक्लपक्ष इत्यर्थः । शुभकर्मस्वापूर्यमाणपक्षप्राशस्त्यात् । तिथौ च जामित्रं लग्नात् सप्तमं स्थानं तस्य गुणः शुद्धिः सा च ग्रहराहित्यं तेन अन्वितायां सत्याम् । यद्यपि जामित्रशुद्धि र्लग्नधर्म्मः तथापि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः । समेतबन्धुर्युक्तबन्धुः सन् सुतायाः दुहितुः विवाहदीक्षां विवाहसंस्कारः सैव विधि कर्म्म तमन्वतिष्ठत् कृतवान् ॥ १ ॥

वैवाहिकैः कौतुकसम्विधानै-
र्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।
आसीत् पुरं सानुमतोऽनुरागा-
दन्तःपुरञ्चैककुलोपमेयम् ॥ २ ॥
सन्तानकाकीर्णमहापथं त-
च्चीनांशुकैः कल्पितकेतुमालम् ।

वैवाहिकैरिति। अनुरागात् प्रीतिवशात् गृहे गृहे प्रतिगृहम्। वीप्सायां द्विर्भावः। विवाहः प्रयोजनमेषामिति वैवाहिकानि तैः। तदस्य प्रयोजनमिति ठक्। कौतुकसम्विधानै मङ्गलार्थसम्पादनैः व्यग्रो व्याकुलः पुरन्ध्रिवर्गः कुटुम्बिनीसंघो यस्मिन् तत्तथोक्तं सानुमतोऽद्रेः पुरं वाह्यमोषधिप्रस्थम् अन्तःपुरम् अवरोधनञ्च एककुलेन एकगृहेण एक गोत्रेण वा उपमेयमासीत्॥ सजातीयगणे गोत्रे गृहेऽपि कथितं कुलमिति विश्वः॥ सर्वेषामपि स्वगृहएव इदं शोभनं वर्त्तत इत्यभिमानोऽभूदित्यर्थः॥ एतेन हिमाद्रेः प्रजारागः उक्तः। अत्र सर्वं सम्पन्नमेवेत्यर्थः॥ २॥

सन्तानेति। सन्तानकैर्मन्दारकुसुमैराकीर्णाः आस्तृताः महापथाः राजकीयपथः यस्मिन् तत्तथोक्तं चीनांशुकैः पट्टवस्त्रैः कल्पिताः विरचिताः केतु-

भासोज्ज्वलत्काञ्चनतोरणानां
स्थानान्तरं स्वर्ग इवाबभासे ॥ ३ ॥
एकैव सत्यामपि पुत्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति पित्रो-
रुमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥
अङ्काद्ययावङ्कमुदीरिताशीः
सा मण्डनान्मण्डनमन्वभुङ्क्त ।

माला: ध्वजपङ्क्तयो यस्य तत्तयोक्तं काञ्चनतोरणानां भासा प्रभया उज्ज्वलद्दीप्यमानं तत् पुरं स्थानान्तरं मेरोरन्यत्र स्थितः स्वर्ग इव आबभासे। उत्प्रेक्षालङ्कारः ॥ ३ ॥

एकेति। पुत्राश्च दुहितरश्च पुत्राः। भ्रातृपुत्रौ स्वसृदुहितृभ्याम् इत्येकशेषः। पुत्रौ पुत्रश्च दुहिता चेत्यमरः। तेषां पङ्क्तौ सङ्घे सत्यामपि उमा एकैव चिरस्य दृष्टेव चिरान्नष्टलब्धेव मृतोत्थितेव मृत्वा पुनरुत्पन्नेव आसन्नपाणिग्रहणा आसन्नविवाहेति भर्तृगृहं गमिष्यतीति हेतोरित्यर्थः। पित्रोर्मातापित्रोः। पिता माता इत्येकशेषः। विशेषेणोच्छ्वसितं प्राणभूताबभूव पुत्रपत्रादपि अधिकप्रेमास्पदमभूदित्यर्थः ॥ ४ ॥

सम्बन्धिभिन्नोऽपि गिरेः कुलस्य
स्नेहस्तदेकायतनं जगाम ॥ ५ ॥
मैत्रे मुहूर्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म चक्रु-
र्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥ ६ ॥

अङ्कादिति सा पार्वती उदीरिताशीः प्रयुक्ताशीर्वादा सती अङ्कादङ्कमुत्सङ्गं ययौ मण्डनान्मण्डनान्तरमन्यत् मण्डनम् अन्वभुङ्क्त, तदा सर्वे बन्धव प्रत्येकमेव तामङ्कमारोप्य मण्डनं प्रायच्छन्नित्यर्थः । तत्र स्नेहनिबन्धनमेवेतत्राह सम्बन्धिभिन्नः स्वपुत्रादिभिः भिन्नो विविक्तोऽपि गिरेः कुलस्य वंशस्य स्नेहस्तदेकायतनं सैवैकमायतनं स्थानं तज्जगाम । तदिति । क्वेदेऽव्ययमेवार्थः विधेयप्राधान्यान्नपुंसकत्वमिति । सर्वे बन्धवः स्वापत्येभ्योऽपि तस्यामधिकं स्निह्यन्तीति तात्पर्यार्थः ॥ ५ ॥

मैत्र इति । अथ मैत्रे मित्रदेवत्ये मुहूर्त्ते उदयमुहूर्त्तात् तृतीयमुहूर्ते इत्यर्थः । आर्द्रं स्वाया मैत्रः शुभो वासव एव चेति बृहस्पतिस्मरणात् । उत्तरफल्गुनीषु फल्गुनीनक्षत्रे । फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे इत्येकस्मिन् नपि बहुवचनम् । शशलाञ्छनेन चन्द्रेण योगं

सा गौरसिद्धार्थनिवेशवद्भि-
र्दूर्वाप्रवालैः प्रतिभिन्नशोभम् ।
निर्नाभिकौशेयमुपात्तवाण-
मभ्यङ्गनेपथ्यमलञ्चकार ॥ ७ ॥
बभौ च सम्पर्कमुपेत्य बाला
नवेन दीक्षाविधिसायकेन ।

गतासु सतीषु तस्याः पार्व्वत्याः शरीरे बन्धुस्त्रियः प्रतिकर्म्म प्रसाधनम् । प्रतिकर्म्म प्रसाधनमित्यमरः । चक्रुः कीदृश्यः या पतिपुत्रवत्यः जीवद्भर्तृका जीवद्पत्याश्चेत्यर्थः ॥ ६ ॥

प्रतिकर्म्मप्रकारमेव प्रपञ्चयति ।

सेति । सा गौरी गौरसिद्धार्थनिवेशवद्भिः श्वेतसर्षपप्रक्षेपवद्भिः दूर्वाप्रवालैः दूर्वाङ्कुरैः प्रतिभिन्नशोभम् विशेषितशोभं निर्नाभि अतिक्रान्तनाभि कौशेयं वस्त्रविशेषोयस्मिन् तत्तथोक्तम् । कौशेयं क्रिमिकशोत्थमित्यमरः । उपात्तवाणं गृहीतशरम् । शरः क्षत्रियया ग्राह्य इति मनुस्मरणात् । अभ्यङ्गनेपथ्यम् अभ्यङ्गवेशम् अलञ्चकार । अलङ्कारमप्यलञ्चकारेत्यर्थः ॥ ७ ॥

बभाविति । किञ्चेति चार्थः । बाला नवेन दीक्षाविधौ विवाहकृतेन्य यः सायक तेन सम्पर्कमुपेत्य बहुलावसाने कृष्णपक्षात्यये शुक्लपक्षादावित्यर्थः । भानोः करेण किरणेन सन्धुक्ष्यमाणा उपचीयमाना । सलि-

करेण भानोर्वहुलावसाने
सन्धुच्यमानेव शशाङ्करेखा ॥ ८ ॥

तां लोध्रकल्केन हृताङ्गतैला-
माश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं
नार्य्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९ ॥

विन्यस्तवैदूर्य्यशिलातलेऽस्मि-
न्नावद्धमुक्ताफलभक्तिचित्रे ।

लसमये शशिनि रवेर्दीधितयोमूर्च्छितास्तमोनैशम्। इत्य-
यन्तीतरादिवचनात्। शशाङ्करेखेव वभौ ॥ ८ ॥

तामिति। लोध्रकल्केन लोध्र चूर्णेन हृतमङ्गतैलं यस्याः तां कृतोद्वर्त्तनामित्यर्थः। आश्यानमीषच्छुष्कं तेन कालेयेन गन्धद्रव्येण कृताङ्गरागां कृतस्नैग्ध्यामित्यर्थः। अथ जायकं कालेयकञ्च कालानुसार्य्यञ्चेत्यमरः। अभिषेकयोग्यं वासो वस्त्रं वसानां स्नानशाटीमाच्छादयन्तीं तां पार्व्वतीं नार्य्यः चतुष्कं चतुस्तम्भगृहं तदभिमुखं व्यनैषुः। स्नानगृहं निन्युरित्यर्थः ॥ ९ ॥

विन्यस्तेति। विन्यस्तं वैदूर्य्यशिलातलं मरकत शिलाप्रदेशो यस्मिन् तस्मिन् आवद्धानां मुक्ताफलानां भक्तिभिः रचनाभिः चित्रे अस्मिन् चतुष्के एनां पार्व-

आवर्जिताष्टापदकुम्भतोयैः
सतूर्यमेनां स्नपयाम्बभूवः ॥ १० ॥
सा मङ्गलस्नानविशुद्धगात्री
गृहीतपत्युद्गमनीयवस्त्रा ।
निर्वृत्तपर्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥

तीम् आवर्ज्जितानाम् आनमितानाम् । अष्टापदकुम्भानां कनककलसानां तोयैः सतूर्यं मङ्गलवाद्ययुक्तं यथा तथा स्नपयाम्बभूबुः। अष्टसु लोहेषु पदं प्रतिष्ठा यस्येति अष्टापदम्। अष्टमः संज्ञायामिति दीर्घः। अष्टापदं स्यात् कनकमिति विश्वः ॥ १० ॥

सेति मङ्गलार्थस्नानेन विशुद्धगात्री निर्म्मलाङ्गी पत्युर्वरस्य उद्गमनीयवस्त्रं धौतवस्त्रम्। धौतमुद्गमनीयं स्यादिति हलायुधः। तत् स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगमित्यमरः। युगग्रहणन्तु प्रायिकाभिप्रायम्। अतएवात्र क्षीरस्वामी युगं प्रायशः यद्वाच्यं तदेव इति व्याख्याय गृहीतपत्युद्गमनीयवस्त्रेत्यत्रतदेव उदाहृतवान्। गृहीतं पतिं प्रति उद्गमनीयवस्त्रं यया सा धौतवस्त्रमाच्छादितवतीत्यर्थः। सा पार्वती निर्वृत्तो-निष्पन्नः पर्ज्जन्यस्य जलेनाभिषेको यस्याः सा तथोक्ताः प्रफुल्लतीति प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता वसुधेव रेजे शुशुभे ॥ ११ ॥

तस्मात् प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये
क्लृप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्यः ॥ १३ ॥

तस्मादिति । किञ्चेति चार्थः । तस्मात् प्रदेशात् स्नानप्रदेशात् वितानवन्तम् उल्लोचयुक्तम् । अस्त्री वितानमुल्लोच इत्यमरः । मणिस्तम्भचतुष्टयेन युक्तं क्लृप्तं सज्जमानमासनं तस्मिन् तं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य दोर्भ्याम् आलिङ्ग्य निन्ये नीता प्रसाधनार्थमित्यर्थः ॥ १२ ॥

तामिति । नार्यः प्रसाधिकाः तां तन्वीं पार्वतीं तत्र वेदिमध्ये प्राङ्मुखीं निवेश्य उपवेश्य पुरो निषण्णाः अग्रे स्थिताः प्रसाध्यते अनेनेति प्रसाधने अलङ्कारसाधनवर्गे सन्निहितेऽपि भूतार्था सत्यरूपा स्वाभाविकीति यावत् या शोभा रामणीयकं तया ह्रियमाणानि आकृष्यमानानि नेत्राणि यासां तास्तथोक्ताः क्षणं व्यलम्बन्त । स्वभावसुन्दर्य्याः किमस्याः प्रसाधनेनेति तूष्णीं तस्थुरित्यर्थः ॥ १३ ॥

धूपोष्मणा त्याजितमार्द्रभावं
केशान्तमन्तः कुसुमं तदीयम्।
पर्य्याक्षिपत् काचिदुदारबन्धं
दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥
विन्यस्तशुक्लागुरु चक्रुरङ्गं
गोरोचनापत्रविभक्तमस्याः ॥
सा चक्रवाकाङ्कितसैकताया-
स्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५ ॥

धूपेति। काचित् प्रसाधिका धूपोष्मणा करणेन आर्द्रभावामार्द्रत्वं त्याजितम्। पचादिषु पाठाद-द्विकर्मत्वम्। त्यजतेर्ण्यन्तादप्रधाने कर्मणि क्तः। अन्तः कुसुमं तस्या इमं तदीयं केशान्तं केशपाशं दूर्वावता मध्ये मध्ये ग्रथितदूर्वेण पाण्डुमधूपदाम्ना हरित मधु-द्रुमकुसुममाल्येन। मधूके गुड़पुष्पमधुद्रुमावित्य-मरः॥ उदारबन्धं रम्यबन्धं यथा तथा पर्य्याक्षि-पत् बबन्ध॥ १४ ॥

विन्यस्तेति। अस्या गौर्य्याः अङ्गं गात्रं विन्यस्तं विरचितं शुक्लागुरु यस्मिन् तत् गोरोचनायाः पत्रैः पत्ररचनाभिः विभक्तं विशेषितञ्च चक्रुः। सा तथा भूता गौरी चक्रवाकैरङ्कितं सैकतं यस्यास्तस्याः त्रिस्रोतसः गङ्गायाः कान्तिं शोभामतीत्य अतिक्रम्य

लग्नद्विरेफं परिभूय पद्मं
समेघरेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धै-
श्चिच्छेद सादृश्यकथाप्रसङ्गं ॥ १६ ॥
कर्णार्पितो लोध्रकषायरूक्षे
गोरोचनाक्षेपनितान्तगौरे ।

तस्थौ । अत्र गोरचनाचक्रवाकयोः पीतत्वेन साम्यं त्रिस्रोतसो धावल्यन्त प्रसिद्धत्वात् न स्वपदेनोपात्तम् ॥ १५ ॥

लग्नेयि । प्रसिद्धैः भूषितैः । प्रसिद्धौख्यातभूषिता वितत्यमरः । अलकैरुपलचिता तस्याः गौर्य्याः आननश्रीः वग्नद्विरेफं पद्मं समेघरेखं मेघरेखायुक्तं शशिनोविम्बञ्च परिभूय तिरस्कृत्य सादृश्यमुपमा तस्य कथा उक्तिः तस्याः प्रसङ्गं प्रसक्तिं सादृश्यं वाङ्मात्र प्रसक्तमपि चिच्छेद अभिनत् । प्रसक्तयोः परिभूतत्वादन्यत्र चाप्रसङ्गादित्यर्थः । अत्र पूर्व्वार्द्धवाक्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेनोपन्यासात्काव्यलिङ्गमलङ्कारः लचणन्तूक्तम् ॥ १६ ॥

कर्णेति । तस्या गौर्य्याः कर्णे अर्पितः निक्षिप्तः यवप्ररोहोयवांकुरः लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन रूक्षे विशदे उवर्त्तिते इत्यर्थः । कषाय

तस्याः कपोले परभागलाभा-
द्बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥

रेखाविभक्तः सुविभक्तगात्र्याः
किञ्चिन्मधूच्छिष्टविमृष्टरागः ।
कामप्यभिख्यां स्फुरितैरपुष्य-
दासन्नलावण्यफलोऽधरोष्ठः ॥ १८ ॥

रसरेदे स्यादङ्गरागे विलेपन इति विश्वः । गोरोचनायाः चेपेण विन्यासेन नितान्तगौरे अतयन्तारुणे । गौरः श्वेतेऽरुणे पीतइति विश्वः । कपोले गण्डस्थले परभागलाभात् वर्णोत्कर्षप्राप्तेः चक्षूंषि द्रष्टृणामिति शेषः बबन्ध जहार आचकर्षेतयर्थः । गोरोचनारुणे गण्डस्थले यवाङ्कुरो विजातीयवर्णसन्निधानाल्लब्धवर्णोत्कर्षः सन् चक्षुराकर्षकोऽभूदिति भावः ॥ १७ ॥

रेखेति । सुविभक्तगात्र्याः सुसंश्लिष्टावयवायाः पार्व्वत्या रेखया मध्यगतया विभक्तः सुश्लिष्टः किञ्चिदीषत् मधूच्छिष्टेन सिक्थकेन विमृष्टो विशेषेण निर्म्मलीकृतो रागो यस्य सः तथोक्तः । मधूच्छिष्टन्तु सिक्थकमिति निर्णिक्तं शोधितं मृष्टमिति चामरः । अन्यलोकम् अलौहित्यापगमायाधरेषु सिक्थकलेपः क्रियते । आसन्नं सन्निहितं लावण्यफलं सौन्दर्यप्रयोजनं मुखचुम्बनादिरूपं यस्य स तथोक्तोऽधरोष्ठः

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशी-
र्माल्येन तां निर्वचनं जघान ॥ १९ ॥
तस्याः सुजातोत्पलपत्रकान्ते
प्रसाधिकाभिर्नयने निरीक्ष्य ।

स्फुरितैः भाविशम्भुभर्त्संसिभिः स्पन्दैः कामप्यनिर्वाच्या-मभिख्यां शोभामपुष्यत् पुपोष । अभिख्या नाम शोभ-योरित्यमरः ॥ १८ ॥

पत्युरिति । सख्या कर्त्र्या चरणौ रञ्जयित्वा ला-क्षारसाक्तौ कृत्वा कृताशीरिति करोतिना समान-कर्तृत्वम् । अनेन चरणेन । रञ्जने द्वयोरपि नियमाच्चरणावित्युक्तापि औचित्यात्ताडनविधौ एकतर-परामर्शद्योतनाङ्कः । पत्युरीश्वरस्य शिरश्चन्द्रकलां सुरत-विशेषे इति शेषः । स्पृश ताड़येति परिहासपूर्वं कृताशीः प्रयुक्ताशीर्वादा सा पार्वती तां सखीं माल्येन मालया । माल्यं मालास्रजावित्यमरः । निर्वचनं यथा तथा तूष्णीमित्यर्थः जघान ताड़यामास । निर्वचन-मित्यनेन विहृताख्यः श्रृङ्गारानुभाव उक्तः । तदुक्तं प्राप्तकालन्तु यद्ब्रूयात् कुर्य्याद्वा विहृतं हि तदिति ॥ १९ ॥

न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम् ॥ २० ॥
सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानै-
रामुच्यमानाभरणा चकाशे ॥ २१ ॥

तस्या इति । प्रसाधिकाभिः अलङ्कर्त्रीभिः सुजाते सम्यगुत्पन्ने उत्पलपत्रे इव कान्ते रम्ये तस्याः नयने निरीक्ष्य कालाञ्जनम् अञ्जनविशेषः चक्षुषोः कान्तिविशेषबुद्ध्या शोभातिशयो भविष्यतीति बुद्ध्ये-त्यर्थः न उपात्तं न गृहीतं किन्तु मङ्गलं शुभमिति हेतोरुपात्तं निसर्गसुभगस्य किमाहार्यप्रकाड़म्बरेणेति भावः ॥ २० ॥

सेति । आमुच्यमानाभरणा निबध्यमानाभरणा सा गौरी सम्भवद्भिरुत्पद्यमानैः कुसुमैर्लतेव अनेन पद्मरागेन्द्रनीलादीन्याभरणानि सूचितानि लताकुसु-मानां नाना वर्णत्वात् । उद्यद्भिरुदयं गच्छद्भिः ज्यो-तिर्भिरुडुभिस्त्रियामा रात्रिरिव अनेन मौक्तिकानि कथितानि । लीयमानैः आश्रयद्भिर्निषीदद्भिरित्यर्थः विहङ्गैश्चक्रवाकैः सरिदिव अनेन सुवर्णाभरणानि सूचितानि विहङ्गाश्च तत्सूचनाय चक्रवाकाः अभि-

आत्मानमालोक्य च शोभमान-
मादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेषः ॥ २२ ॥
अथाङ्गुलिभ्यां हरितालमार्द्रं
माङ्गल्यमादाय मनःशिलाञ्च ।

मताः । चकाशे रेजे । अत्र लताकुसुमादीनां सहजसम्बन्धिनामुपमानत्वेनोपादानात् आहार्यत्रकमपि तस्याः सहजमिवाशोभत इति भावः ॥ २१ ॥

आत्मानमिति । किञ्चेति चार्थः । गौरी शोभमानम् आत्मानं निजशरीरम् आदर्शबिम्बे दर्पणमण्डले । दर्पणे मुकुरादर्शावित्यमरः । स्तिमिता यताक्षी आदरान्निश्चलायतलोचना सती आलोक्य हरोपयाने हरप्राप्तौ त्वरिता व्यग्रा बभूव । स्त्रीणां वेशः नेपथ्यं प्रियस्य भर्त्तुः आलोकः दर्शनं फलं यस्य स तथोक्तो हि । अन्यथा अरण्यचन्द्रिका स्यादिति भावः । अनेन कालाक्षमत्वलक्षणमौत्सुक्यमुक्तमित्यनुसन्धेयम् ॥ २२ ॥

अथेति । अथ प्रसाधनानन्तरं माता मेनका माङ्गल्यं मङ्गलार्थम् आर्द्रं द्रवं हरितालं वर्णद्रव्यविशेषं मनःशिलां धातुविशेषञ्च अङ्गुलिभ्यां तर्ज्जनी-

कर्णावसक्तामलदन्तपत्रं
माता तदीयं मुखमुन्नमय्य ॥ २३ ॥
उमास्तनोद्भेदमनुप्रवृद्धो
मनोरथो यः प्रथमं बभूव।
तमेव मेना दुहितुः कथञ्चि-
द्विवाहदीक्षातिलकञ्चकार ॥युग्मकम्॥२४
बबन्ध चास्राकुलदृष्टिरस्याः
स्थानान्तरे कल्पितसन्निवेशम्।

मध्यमाभ्याम् आदाय कर्णयोरवसक्ते लग्ने अमले दन्तपत्रे यस्य तत्तथोक्तं तस्याः पार्वत्याः इदं तदीयं मुखम् उन्नमय्य। विवाहदीक्षातिलकं चकारेतुरुत्तर-श्लोकेनान्वयः॥ २३ ॥

उमेति। उमायाः स्तनोद्भेदम् अनु स्तनोदयमा-रभ्येत्यर्थः प्रवृद्धो वृद्धिं गतः प्रागेवोत्पन्न इति भावः यो मनोरथः वाञ्छा। वाञ्छा लिप्सा मनोरथ इत्य-मरः। प्रथमं मनोरथान्तरात् प्राक् अयमेव प्रथमो-मनोरथ इत्यर्थः बभूव। मेना दुहितुस्तमेव मनोरथ-भूतमेव। तद्विषये तत्त्वोपचारः। विवाहदीक्षायां विवाहव्रते तिलकं कथञ्चित् कृच्छ्रेण चकार आनन्द-बाष्पान्धतयेति शेषः। विवाहानन्तरभाविलादनेषाम् अयमेव प्रथमो मनोरथो इति भावः युग्मकम्॥ २४ ॥

धात्र्यङ्गुलीभिः प्रतिसार्यमाण-
मूर्णामयं कौतुकहस्तसूत्रम्॥ २५॥
क्षीरोदवेलेव सफेनपुञ्जा
पर्याप्तचन्द्रेव शरत्त्रियामा।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना॥ २६॥

बबन्धेति। अस्याः पार्व्वत्याः अस्रैःरानन्दवाष्पै आकुलदृष्टिः अतएव स्थानान्तरे कल्पितः सन्निवेशो निक्षेपो यस्य तत् स्वस्थानादन्यत्र स्थापितमित्यर्थः अतएव धात्र्याः उपमातुः अङ्गुलीभिः प्रतिसार्यमाणं स्वस्थानं प्राप्यमाणम् ऊर्णामयं मेषादिलोमनिर्मितम्। ऊर्णा मेषादिलोम्नि स्यादित्यमरः। कौतुकहस्तसूत्रं मङ्गलहस्तसूत्रम्। कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहल इति शाश्वतः, बबन्ध च मेनेति शेषः। पूर्वोक्ततिलकक्रियासमुच्चयार्थश्चकारः॥ २५॥

क्षीरोदेति। नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयतीति नवक्षौमनिवासिनी। वसेराच्छादनार्थात्णिनिः। तथा नवं दर्पणमादधाना बिभ्रती सा गौरी सफेनपुञ्जा सडिण्डीरपङ्क्तिः क्षीरमुदकं यस्य सः क्षीरोदः क्षीरसमुद्रः उदकस्योदः संज्ञायाम् इत्युदादेशः तस्य वेला तीरभूमिरिव। वेला काले च

तामर्च्चिताभ्यः कुलदेवताभ्यः
कुलप्रतिष्ठां प्रणमय्य माता।
अकारयत् कारयितव्यदक्षा
क्रमेण पादग्रहणं सतीनाम्॥ २७॥
अखण्डितं प्रेम लभस्व पत्यु-
रित्युच्यते ताभिरुमा स्म नम्रा।

जलधेस्तीरे तीरविकारयोरिति विश्वः। पर्याप्तचन्द्रा पूर्णचन्द्रा वर्षत्रियामा शरद्रात्रिरिव भूयो भूयिष्ठं बभौ चकाशे॥ २६॥

तामिति। कारयितव्येषु दक्षा कारयित्री कर्मोपदेशकुशलेत्यर्थः। माता मेना प्रतितिष्ठति अस्यामिति प्रतिष्ठा। आतश्चोपसर्गे इति कः। स्त्रियां टाप्। कुलस्य प्रतिष्ठां कुलालम्बनभूतां स्थितिकारिणीमित्यर्थः। तां गौरीम् अर्च्चिताभ्यः पूजिताभ्यः कुलदेवताभ्यः गृहदेवताभ्यः प्रणमय्य प्रणतां कारयित्वा। ल्यपि लघुपूर्वात् इति णेरयादेशः। सतीनां पतिव्रतानां पादग्रहणं पदाभिवन्दनं क्रमेण अकारयत् कारयामास। हृक्रोरन्यतरस्यामिति अणिकर्तुः कर्मत्वम्। अन्यत्र नमेरकर्मकत्वात् गतिबुद्धीत्यादिना॥२७

अखण्डितमिति। नम्रा प्रणता उमा ताभिः सतीभिः पत्युः शिवस्य अखण्डितम् अक्षतं प्रेम लभस्व

तया तु तस्यार्द्धशरीरभाजा
पश्चात् कृताः स्निग्धजनाशिषोऽपि ॥ २८ ॥

इच्छाविभूत्योरनुरूपमद्रि-
स्तस्याः कृती कृत्यमशेषयित्वा ।
सभ्यः सभायां सुहृदास्थितायां
तस्थौ वृषाङ्कागमनप्रतीक्षः ॥ २९ ॥

प्राप्नुहि इत्युच्चरते स्म अभिहिता । लट् स्मे इति भूतार्थे लट् । तस्य हरस्य, अर्द्धं शरीरस्य अर्द्धशरीरम् । अर्द्धं नपुंसकमिति समासः । तद्भजतीत्यर्धशरीरभाजा तया गौर्य्या तु स्निग्धजनाशिषो बन्धुजनाशीर्व्वादा अपि पश्चात्कृताः अधरीकृताः ततोऽप्यधिकफललाभादिति भावः ॥ २८ ॥

इच्छाविभूत्योरिति । कृती कुशलः सभायां साधुः सभ्यः । सभायां य इति यप्रत्ययः । अद्रिः हिमवान् इच्छाविभूत्योस्तत्साहैश्वर्य्ययोरनुरूपं सदृशं यथा तथा तस्याः पार्व्वत्याः कृत्यं कर्त्तव्यमशेषयित्वा अशेषं निःशेषं कृत्वा समाप्येत्यर्थः । अशेषशब्दात्तत्करोतीति णयन्तात् क्त्वाप्रत्ययः । सुहृदास्थितायां बन्धुजनाक्रान्तायां सभायां संसदि वृषाङ्कस्य हरस्य आगमनं प्रतीक्षत इति तथोक्तः सन् । कर्म्मण्यण् इति अण् । तस्थौ स्थितः ॥ २९ ॥

तावद्भवस्यापि कुबेरशैले
तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभि-
र्न्यस्तं पुरस्तात् पुरशासनस्य ॥ ३० ॥

तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण ।
स एव वेषः परिणेतुरिष्टं
भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

तावदिति । तावत् यावद् गौरी प्रसाधनं क्रियते तत्काल एवेत्यर्थः । कुबेरशैले कैलासे तदेव पूर्वं तत् पूर्वं तच्च तत् पाणिग्रहणं तस्यानुरूपं प्रसाधनम् अलङ्कारसामग्री आदृताभिः सादराभिः । कर्तरि क्तः । मातृभिः ब्राह्मीप्रभृतिभिः सप्तमातृकाभिः पुरं शास्तीति पुरशासनः तस्य पुरशासनस्य । कर्त्तरि ल्युट् । भवस्यापि पुरस्तादग्रे न्यस्तं निक्षिप्तम् ॥ ३० ॥

तदिति । ईश्वरेण शिवेन सा मङ्गलमण्डनश्री शुभप्रसाधनसम्पत् तद् गौरवात्तासु मातृषु आदरात् केवलं पस्पृशे स्पृष्टैव न तु दध्रे इत्यवधारणार्थः केवलशब्दः । केवलश्चावधृत इति शाश्वतः । किन्तु तस्य विभोः देवस्य सएव वेषः स्वाभाविको भस्मकपालादिवेश एव परिणेतुः लोके वद्वोढ़ रिष्टमपेक्षितं

बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को
गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥
शङ्खान्तरद्योति विलोचनं य-
दन्तर्निविष्टामलपिङ्गतारम् ।

भावान्तरं रूपान्तरं प्रपेदे अङ्गरागादिरूपतां प्रापेत्यर्थः ॥ ३१ ॥

भावान्तरापत्तिमेवाह

बभूवेति । भस्मैव सिताङ्गरागः शुभ्रगन्धानुलेपनं बभूव । कपालमेव अमलं शेखरं शिरोभूषणं तस्य श्रीः शोभा बभूव । गजाजिनस्यैव उपान्तभागेषु अञ्चलप्रदेशेषु रोचनैवाङ्को हंसादिचिह्नं यस्य स तथोक्तः दुकूलभावः पट्टांशुकत्वञ्च बभूव । भस्मादिक मेवाङ्गरागादिभावं प्राप्तमित्यर्थः ॥ ३२ ॥

शङ्खेति । शङ्खान्तरे ललाटास्थिमध्ये द्योतते इति तथोक्तम् ॥ शङ्खो निधौ ललाटास्थ्नीत्यमरः । अन्तर्निविष्टा मध्यगता अमला पिङ्गा तारा कनीनिका यस्य तत्तथोक्तम् । तारकाक्ष्णः कनीनिकेत्यमरः । तत् विलोचनमेव हरितालमय्याः वर्णद्रव्यविशेषविकारस्य तिलकक्रियायाः तिलकरचनायाः सन्निधिरेव सान्निध्यं तदेव पक्षः साध्यम् । पक्षः पार्श्वगरुत्साध्य-

सान्निध्यपक्षे हरितालमय्या
स्तदेव जातं तिलक क्रियायाः ॥ ३३ ॥
यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम् ।
शरीतमात्रं विकृतिं प्रपेदे
तथैव तस्थुः फणरत्नशोभाः ॥ ३४ ॥
दिवापि निष्ठ्यूतमरीचिभासा
बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौले
श्चूडामणेः किं ग्रहणं हरस्य ॥ ३५ ॥

सहायबलभित्तिष्विति यादवः। तस्मिन् सान्निध्यपक्षे जातं प्रविष्टमित्यर्थः अनेन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम् ॥ ३३ ॥

यथेति । यथाप्रदेशं प्रदेशान् प्रकोष्ठादीननतिक्रम्य आभरणान्तरत्वमुक ङ्कणाद्याभरणविशेषत्वं करिष्यतां सम्पादयिष्यतां भुजगेश्वराणां शरीरमात्रं शरीरमेव विकृतिं रूपान्तरं प्रपेदे। फणरत्नशोभास्तथैव तस्थुः तासां तथैवोपादेयत्वादिति भावः ॥ ३४ ॥

दिवेति । दिवा दिनेऽपि निष्ठ्यूता उद्गीर्णा मरीचिभासः किरणकान्तयो यस्य तेन बाल्यादल्पतनुत्वादनाविष्कृतलाञ्छनेन अदृश्यमानकलङ्केनेत्यर्थः ।

इत्थम्प्रतैकप्रभवः प्रभावात्
प्रसिद्धनेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते
खड्गे निषिक्तप्रतिमं ददर्श ॥ ३६ ॥
स गोपतिं नन्दिभुजावलम्बी
शार्दूलचर्म्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाण
मारुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

चन्द्रेण नित्यं सर्वदा प्रतिभिन्नमौलेः सङ्गतमुकुटस्य हरस्य चूड़ामणेर्ग्रहणं स्वीकारः किं किमर्थम् । चन्द्रचूड़ामणेर्देवस्य किमन्यैश्चूड़ामणिभिरिति भावः ॥३५॥

इत्थीति । इत्थं प्रभावात् सामर्थ्यात् प्रसिद्धस्य नेपथ्यविधेः वेशविधानस्य विधाता निर्माता । अतएवाद्भूतानामाश्चर्य्याणां एक प्रभवः मुख्यनिधिः । स देवः आसन्नगणेन पार्श्वं स्थवर्गेण प्रमथगणेनेत्यर्थः उपनीते आनीते खड्गे निषक्तप्रतिमं सङ्क्रान्तप्रतिविम्बमात्मानं ददर्श । वीरपुरुषाणामेव आचारः ॥ ३६ ॥

सइति । सदेवः दन्दिभुजावलम्बी नन्दिकेश्वरभुजावलम्बनः सन् शार्दूलचर्मणा व्याघ्रचर्म्मणा अन्तरितम् आच्छादितम् उरु विशालं पृष्ठं यस्य तं तयो-

तं मातरो देवमनुव्रजन्त्यः
स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः
पद्माकरं चक्रुरिवान्तरीक्षम् ॥ ३८ ॥

तासाञ्च पश्चात् कनकप्रभाणां
काली कपालाभरणा चकाशे ।
बलाकिनी नीलपयोदराजी
दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥

त्तम् । शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः । तस्मिन् देवे भक्त्या संक्षिप्तं सङ्कोचितं वृहत् प्रमाणं यस्य तं कैलासमिव गोपतिं वृषभम् आरुह्य प्रतस्थे चचाल ॥ ३७॥

तमिति । तं देवम् अनुव्रजन्त्योऽनुगच्छन्त्यः स्ववाहनानां क्षोभेण प्रकम्पेण चलावतंसाश्चलकुण्डलाः मातरः सप्त मातृकाः प्रभामण्डलानेत्यव रेणवः परागाः तैः गौरैररुणैः। गौरोऽरुणे सिते पीत इति यादवः। मुखैः अन्तरीक्षमाकाशं पद्माकरमिवचक्रुः ॥ ३८॥

तासामिति। कनकप्रभाणां सुवर्णवर्णानां तासां मातॄणां पश्चात् कपालाभरणा सितकपालालङ्कारेत्यर्थः। काली महाकाली देवी च। कृष्णवर्णत्वसूचनाय कालीसंज्ञयाभिधानम्। बलाकिनी बला-

ततो गणैः शूलभृतः पुरोगै-
रुदीरितो मङ्गलतूर्यघोषः ।
विमानशृङ्गाण्यवगाहमानः
शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥
उपाददे तस्य सहस्ररश्मि
स्त्वष्ट्रा नवं निर्मितमातपत्रम् ।

कावतौ व्रीह्यादित्वादिनिः । दूरं यथा तथा पुरोऽग्रे
चिप्ताः प्रसारिताः शतक्रदाः विद्रुततोयस्याः स्रातयोत्ता
नीलपयोदराजौ कालमे घपङ्क्तिरिव चकाशे ॥ ३९ ॥

ततइति । ततः अनन्तरं शूलभृतः शिवस्य पुरो
गच्छन्तीति पुरोगैः अग्रेसरैः । अन्यत्रापि दृश्यत
इति वक्तव्यमिति गमेर्डप्रत्ययः । गणैः प्रमथैरुदीरितः
उत्पादितः मङ्गलतूर्यघोषोमङ्गलवाद्यध्वनिः विमान-
शृङ्गाण्यवगाहमानः सर्वसुरेभ्योविमानस्थेभ्यः सेवा-
वसरं शशंस । सुराः प्रस्थानतूर्यध्वनिमाकर्ण्य अय-
मेव नः सेवावसर इत्याजग्मुरित्यर्थः ॥ ४० ॥

सुराणां सेवाप्रकारमेवाह

उपेति । तस्य हरस्य सहस्ररश्मिः सूर्यः त्वष्ट्रा
विश्वकर्मणा निर्मितं नवमातपत्रम् उपाददे छत-
वानित्यर्थः । उत्प्रेच्यते तद्दुकूलात्तस्यातपत्रस्य
प्रान्तलम्बिनो दुकूलादविदूरमौलिः तद्दुकूलस्यास-
न्नमौलिरित्यर्थः । स हरः उत्तमाङ्गे शिरसि ।

स तद्दुकूलादविदूरमौलि-
र्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥
मूर्त्ते च गङ्गायमुने तदानीं
सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि
सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥

उत्तमाङ्गं शिरः शीर्षमित्यमरः । पतन्ती गङ्गा यस्य सः पतद्गङ्ग इव बभौ । दुकूलादित्यत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति दूरार्थयोगे विकल्पेन पञ्चमी । नाथेनोक्तम् अन्यारादित्यत्र आराच्छब्दस्यार्थग्रहणार्थत्वात् पञ्चमीति । तदनाकरम् । किञ्चास्य शास्त्रोक्तविकल्पापवादत्वात् दूरं ग्रामस्येत्यादि षष्ठीप्रयोगः दूरापास्तः स्यादित्युपेक्षणीयमेव ॥ ४१ ॥

मूर्त्ते इति । गङ्गा च यमुना च गङ्गायमुने मूर्त्ते विग्रहधारिण्यौ सचामरे चामरसहिते सत्यौ अत एव समुद्रगा नदी तस्याः रूपं स्वरूपं तस्य विपर्ययेऽप्यभावेऽपि ॥ हंसपातेन हंससञ्चारेण सह वर्त्तते इति सहंसपाते इव । तेन सहेति तुल्ययोगे इति बहुव्रीहिः । वोपसर्जनस्येति समासः । लक्ष्यमाणे दृश्यमाने सत्यौ तदानीं विवाहसमये देवमसेविषाताम् अभजताम् । सेवतेर्लुङ् । गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थाते इत्यर्थः ॥ ४२ ॥

तमभ्यगच्छत् प्रथमो विधाता
श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य
संवर्द्धयन्तौ हविषेव वह्निम् ॥ ४३ ॥

एकैव मूर्त्तिर्विभिदे त्रिधा सा
सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचित्
वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४ ॥

तमिति । प्रथमः आद्यो विधाता चतुर्मुखः तथा श्रीवत्सलक्ष्मा श्रीवत्साङ्कः पुरुषो विष्णुश्च साक्षात् तं देवमभ्यगच्छत् सम्मुखमाययौ किं कुर्व्वन्तौ जयेति वाचा जयशब्देन अस्येश्वरस्य महिमानं महत्त्वं हविषा वह्निमिव संवर्द्धन्तौ वृद्धिं गमयन्तौ ॥ ४३ ॥

न चानुचितमेतदुक्तमित्याह

एकेति । सा एकैव मूर्तिस्त्रिधा ब्रह्मविष्णुशिवात्मकत्वेन विभिदे । औपाधिकोऽयं भेदो न वास्तविक इत्यर्थः । अतएव एषां त्रयाणां प्रथमावरयोर्भावः प्रथमावरत्वं ज्यैष्ठकनिष्ठभावः सामान्यं साधारणम् । इच्छया सर्वे ज्येष्ठा भवन्ति कनिष्ठाश्चेत्यर्थः । एतदेव विवृणोति कदाचिद्विष्णोः हरः आद्यः कदाचित्तस्य हरिराद्यः कदाचित्तयोर्हरिहरयोर्वेधा आद्यः कदा-

तं लोकपालाः पुरुहूतमुख्याः
श्रीलक्षणोत्सर्गविनीतवेषाः ।
दृष्टिप्रदाने कृतनन्दिसंज्ञा-
स्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५ ॥

कम्पेन मूर्ध्नः शतपत्रयोनिं
वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्
सम्भावयामास यथाप्रधानम् ॥ ४६ ॥

चित्तौ हरिहरावपि धातुः स्रष्टुराद्यौ। एवमेतेषां पौर्वापर्यक्रमनियतमिति दर्शितम् ॥ ४४ ॥

तमिति। पुरुहूतमुख्याः इन्द्रादयो लोकपालाः श्रीलक्षणानामैश्वर्यप्रचिह्नानां छत्रचामरवाहनानाम् उत्सर्गेण त्यागेन विनीतवेषाः अनुमीतवेषाः सन्तः तथा दृष्टिप्रदाने दर्शननिमित्ते कृतसंज्ञा सङ्केतो- यैस्तादृशाः मम दर्शनं दापयेति नन्दिनम् प्रति कृत- हस्तादिसूचना इत्यर्थः। संज्ञा स्यात्चेतना नाम हस्ता- द्यैश्चार्थसूचनेत्यमरः। तद्दर्शिताः तेन नन्दिना दर्शिताः अयमिन्द्रः प्रणमति अयं चन्द्र इत्याद्युक्तिपूर्वकं निवेदिताः प्राञ्जलयः कृताञ्जलयः सन्तः तं भवं प्रणेमुः प्रणताः ॥ ४५ ॥

कम्पेनेति। स देवः शतपत्रयोनिं चतुर्मुखं

तस्मै जयाशीः ससृजे पुरस्तात्
सप्तर्षिभिस्तान् स्मितपूर्व्वमाह ।
विवाहयज्ञे वितते ऽत्र यूय-
मध्वर्यवः पूर्ववृता मयेति ॥ ४७ ॥
विश्वावसुप्राग्रहरैः प्रवीणैः
सङ्गीयमानत्रिपुरावदानः ।

सुष्ठुः कम्पेन तया हरिं वाचा सम्भाषणेन वृत्तं हतवन्तं

वृतहणम् इन्द्रम् ब्रह्मभ्रूणवृत्रेषु क्विप् इति क्विप् । स्मितेन मन्दहासेन अशेषान् सुरानालोकमात्रेण दृष्टिमात्रेण इत्थं यथाप्रधानं यथार्हं सम्भावयामास ॥४६॥

तस्मादिति । तस्मै शिवाय सप्तर्षिभिः । दिक्संख्ये संज्ञायामिति समासः । पुरस्तादग्रे जयेत्याशीः ससृजे प्रयुक्ता । तान् सप्तर्षीन् स्मितपूर्व्वमाह । किमिति । वितते विस्तृते । विवाह एव यज्ञः तस्मिन् यूयं मया पूर्व्वमेव वृताः प्रार्थिताः अध्वर्यवः ऋत्विजः इति विशेषवाचिना सामान्यमुक्तम् ॥ ४७ ॥

विश्वावस्विति । विश्वावसुर्नाम कश्चिद्गन्धर्वः देवगायकः तत्प्राग्रहरैः तत्प्रमुखैः प्रवीणैः प्रकृष्टवीणैः निपुणैर्वा । प्रवीणे निपुणाभिज्ञनिष्णातशिक्षिताद्दृतत्रमरः । त्रयाणां पुराणां समाहारस्त्रिपुरम् । तद्धितार्थोत्तरपदेत्यादिना समाहारसमासः । पात्रादिभ्यः

अध्वानमध्वान्तविकारलङ्घ्य-
स्ततार ताराधिपखण्डधारी ॥ ४८॥
खे खेलगामी तमुवाह वाहः
सशब्दचामीकरकिङ्किणीकः ।
तटाभिघातादिव लग्नपङ्के
धुन्वन् मुहुः प्रोतघने विषाणे ॥ ४९ ॥

प्रतिषेधोवक्तव्यः इति स्त्रीलिङ्गान्ततानिषेधः । त्रिपुरस्य सम्बन्धयवदानं पूर्व्ववृत्तं कर्म्म विजयरूपं त्रिपुरावदानं तत्सङ्गीयमानं यस्य स तथोक्तः । अवदानं कर्म्म वृत्तमित्यमरः । ध्वान्तं तमो मोह इति यावत् तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीत्यध्वान्तविकारलङ्घ्यः । विवाहादिकन्तु तस्य लीलेत्यर्थः । ताराधिपखण्डधारी चन्द्रशेखरः शम्भुः अध्वानं मार्गं ततार अतरगच्छत् ॥ ४८ ॥

खे इति । खे आकाशे खेलं सुन्दरं गच्छतीति खेलगामी सशब्दाः शब्दायमानाः चामीकरकिङ्किण्यः काञ्चनक्षुद्रघण्टिकाः यस्य सः तथोक्तः । किङ्किणी क्षुद्रघण्टिकेत्यमरः । प्रोतघने सुरतमेघे अतएव तटाभिघातात् रोधोभेदात् लग्नपङ्के श्लिष्टकर्द्दमे इव स्थिते विषाणे मुहुर्धुन्वन् तं हरम् उवाह वहति स्म ॥ ४९ ॥

स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्त्तात् ।
पुरोविलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव कृष्यमाणः ॥ ५० ॥

तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य मार्गा-
दासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥

स इति । स वाहः न प्राप्तः पराभियोगः शत्रु-समाक्रान्तिर्यस्य तत्तथोक्तं नगेन्द्रेण हिमवता गुप्तं रचितं नगरमोषधिप्रस्थं पुरोऽग्रे विलग्नैः संक्रान्तै-र्हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाण इव मुहूर्त्तात् प्रापत् अन्यथा कथं दूरस्यात्राशुप्राप्तिः स्यादिति भावः । पुरः प्रसृताः हरदृष्टयः पिङ्गलवर्णत्वात् सौव-र्णानि दृषाकर्षणदामानीव अलक्ष्यन्त इत्यर्थः ॥ ५० ॥

तस्येति । तस्य पुरस्योपकण्ठे अन्तिकेघनो मेघ-इव नीलः कण्ठो यस्य सःघननीलकण्ठः देवः कुतूह-लाद्दर्शनौत्सुक्यादुन्मुखैः पौरैर्दृष्टः सन् स्वबाणचि-ह्नात् त्रिपुरविजयसमये स्वबाणाङ्कान्मार्गात् कुतश्चि-दाकाशप्रदेशात् अवतीर्य अवरुह्य आसन्नभूपृष्ठं निकट-भूतलम् इयाय प्राप ॥ ५१ ॥

तम्हद्धिमद्बन्धुजनाधिरूढ़ै-
र्वृन्दैर्गजानां गिरिचक्रवर्त्ती ।
प्रत्युज्जगामागमनप्रतीतः
प्रफुल्लवृत्तैः कटकैरिव स्वैः ॥ ५२ ॥
वर्गावुभौ देवमहीधराणां
द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ
भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥

तमिति । आगमनेन शिवागमनेन प्रतीतो हृष्टः गिरिचक्रवर्त्ती पर्व्वताधिराजः हिमवान् ऋद्धिमता वस्त्रालङ्कारादिसम्पन्नेन बन्धुजनेन अधिरूढ़ैः अनेन बन्धूनां समस्वाम्यं सूचितम् । गजानां वृन्दैः प्रफुल्लाः विकसितकुसुमाः वृक्षाः येषु तैः स्वैः स्वकीयैः कटकैः नितम्बैरिव तं हरं प्रत्युज्जगाम अभिययौ कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः ॥ ५२ ॥

वर्गाविति । दूरविसर्पी दूरगामी घोषो ययोस्तौ देवाश्च महीधराश्च तेषां देवमहीधराणाम् उभौ वर्गौ उद्घटितापिधाने अपनीतकवाटे पुरस्य द्वारे भिन्नः दीर्णः एकसेतुः याभ्यां तौ भिन्नैकसेतू पयसामोघौ प्रवाहाविव समीयतुः सङ्गतौ ॥ ५३ ॥

ह्रीमानभूद्भूमिधरो हरेण
त्रैलोक्यवन्द्येन कृतप्रणामः।
पूर्वं महिम्ना स हि तस्य दूर-
मावर्जितं नात्मशिरो विवेद ॥ ५४ ॥
स प्रीतियोगाद्विकसन्मुखश्रौ
जामातुरग्रेसरतामुपेत्य।

ह्रीमानिति। भूमिधरो हिमवान् त्रयो लोकास्त्रै-लोक्यं चातुर्वर्ण्यादित्वात् ष्यञ् प्रत्ययः। तस्य वन्द्येन नमस्कार्येण हरेण कृतप्रणामः सन्। ऋत्विक्पितृव्य श्वशुरमातुलानां यवीयसाम्। प्रथया प्रथमं कुर्यात् प्रत्युत्थायाभिवादनमिति स्मरणात्। ह्रीमानभूत् महादेवं प्रति स्वयमल्पत्वात् सङ्कोचं प्रापेत्यर्थः। ननु विदितेश्वरमहिम्नः स्वयं प्रागेव प्रणतस्य जामा-तुराचारमात्रस्वीकारे कः सङ्कोच इति शङ्कां निर-स्यति पूर्वमिति हि यस्मात् स हिमवान् पूर्वं प्रागेव तस्य ईश्वरस्य महिम्ना सामर्थ्येन दूरमत्यन्तम् आव-र्ज्जितं नमितमात्मशिरः न विवेद। स्वयं प्रणत त्वानुसन्धाने न शङ्कोचः तदनुसन्धानन्त्वौत्सुक्यान्ना-स्तीति भावः ॥ ५४ ॥

स इति। प्रीतियोगात् सन्तोषसम्बन्धात् विकस-न्मुखश्रीः विकसन्ती मुखश्रीर्यस्य स तथोक्तः स हिम-

प्रावेशयन्मन्दिरमृद्धमेन
मागुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥
तस्मिन्मुहूर्ते पुरसुन्दरीणा-
मीशानसन्दर्शनलालसानाम्।
प्रासादमालासु बभूवुरित्थं
त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५६ ॥

वान् जायां मिमीते जानातीति जामातुः वरस्तत्र पृषोदरादित्वात् साधुः। जामाता दुहितुः पतिरित्यमरः। अग्रेसरतां पुरोगामित्वमुपेतत्र एनं देवम् आगुल्फं पादग्रन्थिपर्यन्तं कीर्णानि पर्यस्तानि आपणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिन् तत् आगुल्फकीर्णापणमार्गपुष्पम्। तद्ग्रन्थी घुटिके गुल्फावित्यमरः। ऋद्धं समृद्धं मन्दिरं नगरम्। मन्दिरं नगरेऽगारे मन्दिरो मकारालय इति विश्वः। प्रावेशयत् ॥ ५५ ॥

तस्मिन्निति। तस्मिन् मुहूर्ते हरपुरप्रवेशसमये ईशानस्य सन्दर्शने लालसानां लोलुपानाम्। लोलुपो लोलुभोलोलो लालसो लम्पटश्च स इति यादवः। पुरसुन्दरीणां प्रासादमालासु इत्थं वक्ष्यमाणप्रकारेण तत्रक्तान्यकार्याणि विसृष्टकार्यान्तराणि विचेष्टितानि व्यापाराः। नपुंसके भावे क्तः। इति क्तः बभूवुः आसन् ॥ ५६ ॥

आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्धुं न सम्भावितएव तावत्
करेण रुद्धोऽपि च केशपाशः ॥ ५७ ॥

प्रसाधिकालम्बितमग्रपाद-
माक्षिप्य काचित् द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षा-
दलक्तकाङ्कां पदवीं ततान ॥ ५८ ॥

तान्येवाह पञ्चभिः श्लोकैः ।

आलोकेति । आलोकमार्गं दर्शनपथं गवाक्षमित्यर्थः । सहसा व्रजन्त्या गच्छन्त्या कयाचित् उद्वेष्टनः द्रुतगतिवशादुन्मुक्तबन्धनः अत एव वान्तमाल्यः उद्गीर्णमाल्यश्च यः स उद्वेष्टनवान्तमाल्यः करेण रुद्धो गृहीतोऽपि च केशपाशः केशकलापः । पाशः पक्षश्च हस्तश्च कपालपार्थ्याः कचात् पर इत्यमरः । तावदालोकनमार्गप्राप्तिपर्यन्तं बन्धुं बन्धनायेत्यर्थः । न सम्भावितः न स्मृत एव ॥ ५७ ॥

प्रसाधिकेति । काचित् स्त्री प्रसाधिकया अलङ्कर्त्री आलम्बितं रञ्जनार्थं धृतं द्रवरागमेव आर्द्रालक्तकमेव अग्रश्चासौ पादश्च अग्रपाद इति समानाधिकरणसमासः । हस्ताग्राग्रहस्तादयोगुणगुणिनोर्भेदाभ्यामिति

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ५९ ॥
जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम्।

वामनः। तस्माचिप्य आकृष्य उत्सृष्टलीलागतिः त्यक्तमन्दगमना सती आ गवाचाद् गवाक्षपर्यन्तं पदद्वयमेतत्। पदवीमलक्तकाङ्कां लाचारसचिह्नां ततान ॥ ५८ ॥

विलोचनमिति। अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य अलङ्कृत्य तद्वञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं यस्याः सा तथोक्ता सती तथैव तेनैव रूपेण शलाकाम् अञ्जनकूर्च्चिकां वहन्ती बिभ्रती वातायनसन्निकर्षं गवाक्षसमीपं ययौ। दक्षिणग्रहणं संभ्रमात् व्युत्क्रमद्योतनार्थं सव्यं हि पूर्व्वं मनुष्या अञ्जत इति श्रुतेः ॥ ५९ ॥

जालान्तरेति। अन्या स्त्री जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रसारितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वस्त्रग्रन्थिम्। नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससीति विश्वः। न बबन्ध नाव-

नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

अर्द्धाचिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानी-
मङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥

तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥ ६२ ॥

स्मात्। किन्तु नाभिं प्रविष्टा आभरणानां किङ्किणीनां प्रभा यस्य तेन। प्रभैव नाभेरावरणमभूदिति भावः। हस्तेन वासोऽवलम्ब्य धृत्वा तस्थौ ॥ ६० ॥

अर्द्धेति। सत्वरं सवेगमुत्थितायाः कस्याश्चित् अर्द्धमाचिता मणिभिर्गुम्फिता अर्द्धाचिता दुर्निमिते संभ्रमात् दुःखेन निक्षिप्ते डुमिञ् प्रक्षेपण इति धातोः कर्मणि क्तः। पदेपदे प्रतिपदं वीप्सायां द्विर्भावः। गलन्ती गलद्रूला सती रशना मेखला तदानीं तस्मिन् अवसरे अङ्गुष्ठमूले अर्पितं गलितं सूत्रमेव शेषो यस्याः सा आसीत ॥ ६१ ॥

तासामिति। तदानीं सान्द्रकुतूहलानां तासां

तावत् पताकाकुलमिन्दुमौलि-
रुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्व्वन्
ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥
तमेकदृश्यं नयनैः पिबन्त्यो
नार्य्यो न जग्मुर्व्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां
सर्व्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥

स्त्रीणाम् आसवगन्धो गर्भे येषां तैः विलोलानि नेत्राण्येव भ्रमराः येषु तैर्मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्राभरणा इवासन् कमलालङ्कृता इव स्थिता इत्यर्थः ॥ ६२ ॥

तावदिति । तावत्तस्मिन्नवसरे इन्दुमौलिरीश्वरः दिवापि प्रासादशृङ्गाणि ज्योत्स्नाभिरभिषेकेण स्नपनेन द्विगुणद्युतीनि द्विरावृत्तकान्तीनि । गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यशब्देष्विति वैजयन्ती । कुर्व्वन् पताकाभिराकुलं व्याकीर्णम् उत्तोरणम् उच्छ्रिततोरणं राजपथं प्रपेदे ॥ ६३ ॥

तमिति । एकएव दृश्यो दर्शनीयः तम् एकदृश्यं तमीश्वरं नयनैः पिबन्त्यः अतितृष्णया पश्यन्त्य इत्यर्थः । ताः शङ्करं दृष्टिभिरापिबन्त्य इति वा पाठः । नार्य्यो विषयान्तराणि ततोऽन्यान्विषयान्

स्थाने तपो दुश्चरमेतदर्थ-
मपर्णया पेलवयापि तप्तम ।
या दास्यमप्यस्य लभेत नारी
सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥ ६५

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।

शब्दादीनित्यर्थः। न जग्मुः न विदुरित्यर्थः। तथाहि आसां नारीणां शेषेन्द्रियवृत्तिः श्रोत्रादि प्रवृत्तिः सर्वात्मना स्वरूपकात्स्न्येन चक्षुः प्रविष्टेव श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात् स्वयमपरमुपलभन्ते किमु। अन्यथा स्वस्व विषयाधिगमः किं न स्यादिति भावः ॥ ६४ ॥

अथ पौराङ्गनावचनान्याह

स्थान इति। पेलवया कोमलयाप्यपर्णया पार्वत्या एतस्मै शिवाय इदम् एतदर्थम्। अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति विशेषनिघ्नत्वम्। दुश्चरं तपस्तप्तं स्थाने युक्तम्। कुतः या नारी अस्येश्वरस्य दास्यं दासीत्वमपि लभेत सा कृतार्था स्यात्। या अङ्कएव शय्या तामङ्कशय्यां लभेत सा किमुत कृतार्थेति किमु वक्तव्यमित्यर्थः ॥ ६५ ॥

परस्परेणेति। स्पृहणीयशोभं सर्वैराशास्यमानसौन्दर्यम् इदं द्वन्द्वं मिथुनम्। द्वन्द्वरहस्यमर्यादादिना

अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥ ६६ ॥
न नूनमारूढरुषा शरीर
मनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये
सन्न्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥
अनेन सम्बन्धमुपेत्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण ।

निपातः । परस्परेण नायोजयिष्यत् न योजयेद्यदि प्रजानां पत्युर्विधातुः अस्मिन् द्वये द्वन्द्वे रूपविधाने सन्दर्यनिर्माणे यत्नः प्रयासोविफलोऽभयिष्यत् भवेत् । एतदनुरूपस्त्रीपुंसान्तराभावादिति भावः । लिङ्-निमित्ते लृङ् क्रियातिपत्ताविति लृङ् ॥ ६६ ॥

नेति । आरूढरुषा प्ररूढकोपेण अनेन हरेण कुसुमायुधस्य कामस्य शरीरं न दग्धं नूनं किन्तु कामः अमुं देवमुदीक्ष्य दृष्ट्वा व्रीडात् सौन्दर्येण जितोऽस्मीति लज्जया स्वयमेव सन्न्यस्तदेहः त्यक्तदेह इति मन्ये इत्युत्प्रेक्षा । न्यतस्ताद्वतेः कोपः सम्भ-तीति भावः ॥ ६७ ॥

काचित् काञ्चिदाह

अनेनेति । हे आलि सखि आलिः सखी वयस्या चेत्यमरः । शैलराजोहिमवान् दिष्ट्या इत्यानन्देऽ-

मूर्द्धानमालि क्षितिधारणोच्च
मुच्चैस्तरं वक्ष्यति शैलराजः ॥ ६८ ॥
इतीोषधिप्रस्थविलासिनीनां
शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं
हिमालयस्यालय माससाद ॥ ६९ ॥

व्ययम्। मनोरथैः प्रार्थितमवरुद्धम् अभिलाषविषयीकृतमित्यर्थः। प्रार्थना याच्ञावरोधयोरित्यभिधानात्। अनेन ईश्वरेण सम्बन्धमुपेत्य अवाप्य क्षितिधारणेनोच्चमुन्नतं मूर्द्धानमुच्चैस्तरम् उन्नततरम्। उच्चैरित्यव्ययात्तरप्प्रत्ययः। मूर्द्धोद्रव्यत्वान्नामुप्रत्ययः। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्यादिना अद्रव्यप्रकर्षे तस्य विधानादिति। वक्ष्यति धारयिष्यति। वहतेर्लृट्॥ ६८ ॥

इतीति। त्रिनेत्रस्त्र्यम्बकः त्रिनेत्रत्रिनयनशब्दयोः क्षुभ्नादिषु चेति णत्वाभावः। इति इत्थमोषधिप्रस्थविलासिनीनां सम्बन्धिनीः श्रोत्रसुखाः श्रवणमधुराः कथाः आलापान् शृण्वन् केयूरैरङ्गदैश्चूर्णीकृताः लाजानां मुष्टयोयस्मिन् तं तथोक्तम्। तत्रावकीर्णाः आचारलाजाः अन्तरालएवाङ्गदैः चूर्णपेषं पिष्यन्त इति पुरन्ध्रिजनसम्बन्धातिशयोक्तिः। हिमालयस्य हिमवतः आलयं भवनमाससाद ॥ ६९ ॥

तत्रावतीर्य्याच्युतदत्तहस्तः
शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन
कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥

त मन्वगिन्द्रप्रमुखाश्च देवाः
सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्य्यालयमन्वगच्छन्
प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१ ॥

तत्रेति । तत्र हिमवदालये अच्युतेन विष्णुना दत्तहस्तः वितीर्णहस्तावलम्बः सन् शरद्घनाच्छरन्मेघात् शरद्विशेषणान्मेघस्य शुभ्रत्वं गम्यते । दीधितिमान् सूर्य्य इव उक्ष्णः वृषादवतीर्य्य कमलासनेन पूर्वमग्रे क्रान्तानि प्रविष्टानि अद्रिपतेः कक्ष्यान्तराणि गेहप्रकोष्ठान्तराणि विवेश । कक्ष्या कक्षवरत्रायां गेहप्रकोष्ठक इति यादवः ॥ ७० ॥

तमिति । तमीश्वरम् अन्वगनुपदम् अव्ययमेतत् । अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययमित्यमरः । इन्द्रप्रमुखा देवाश्च सप्त ऋषयः पूर्वे येषान्ते सप्तर्षिपूर्वाः स बहुव्रीहाविति सर्वनामसंज्ञाप्रतिषेधः । परमर्षयः सनकादिमहर्षयश्च । सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति तत्पुरुषः । गणाः प्रमथाश्च उत्तमार्थाः

तत्रेश्वरो विष्टरभाग्यथावत्
सरत्नमर्घं मधुमच्च गव्यम्।
नवे दुकूले च नगोपनीतं
प्रत्यग्रहीत् सर्वममन्त्रवर्ज्जम्॥ ७२॥

दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधदक्षैः।

महाप्रयोजनाः प्रशस्तं प्रकृष्टम् अमोघमित्यर्थः। आरभ्यत इत्यारम्भः उपायः तमिव गिर्यालयं हिमवन्मन्दिरम् अभ्यगच्छन् प्राविशन्नित्यर्थः॥ ७१॥

तत्रेति। तत्र हिमवदालये ईश्वरो विष्टरभागासनगतः उपविष्ट इत्यर्थः। यथावद्यथार्हं विधिवदित्यर्थः। सरत्नं रत्नसहितम् अर्घम् अर्घार्थं जलं मधु चौद्रमस्मिन्नस्तीति मधुमत् गविभवं गव्यं दधि च मधुपर्कमित्यर्थः। दधिमधुनी सर्पिर्म्मध्वलाभव इति आश्वलायनगृह्यसूत्रात्। नवे दुकूले चेति सर्वं नगोपनीतं हिमवदानीतम् अर्घ्यादिकं मन्त्रान्वर्ज्जयित्वा मन्त्रवर्ज्जं ततो नञ् समासः अमन्त्रवर्ज्जं मन्त्रान् न वर्जयित्वेत्यर्थः। द्वितीयायाञ्चेति णमुल् प्रत्ययः इत्याह न्यासकारः अनुदात्तं पदमेकवर्ज्जमित्यत्र। प्रत्यग्रहीत् स्वीकृतवान्॥ ७२॥

दुकूलेति। अथ दुकूलवासाः दुकूलं वसान इत्यर्थः। स हरः विनीतैः अनुद्धतैः अवरोधेषु ये दक्षाः तैः

वेलासमीपं स्फुटफेनराजि-
र्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥
तया प्रवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षुःकुमुदः कुमार्य्या ।
प्रसन्नचेतः सलिलः शिवोऽभूत्
संसृज्यमानः शरदेव लोकः ॥ ७४ ॥
तयोः समापत्तिषु कातराणि
किञ्चिद्व्यवस्थापितसंहृतानि ।

अवरोधदक्षैः वधूसमीपं निन्ये नीतः । कथमिव स्फुटा फेनानां राजिर्यस्य सः उदकमस्यास्तीत्युदन्वान् समुद्रः । उदन्वानुदधौ चेति निपातनात्साधुः । नवैः अचिरोदितैः चन्द्रपादैश्चन्द्रकिरणैः वेलासमीपमिव ॥ ७३ ॥

तयेति । आननं चन्द्र इवेत्युपमितसमासः । प्रवृद्धा आननचन्द्रस्य कान्तिर्यस्यास्तया तथोक्तया तया कुमार्य्या शरदा लोक इव संसृज्यमानः सङ्गच्छमानः शिवः चक्षूंषि कुमुदानीव तानि प्रफुल्लानि यस्य सः तथोक्तः चेतः सलिलमिव तत् प्रसन्नं यस्य स तथोक्तः प्रसन्नचेतः सलिलोऽभूत् । शरल्लोकयोरपि तथा चित्तं विशेषणानि योजनीयानि ॥ ७४ ॥

तयोरिति । तयोः वधूवरयोः समापत्तिषु यदृ-

ह्रीयन्त्रणां तत्क्षणमन्वभुव-
न्नन्योन्यलोलानि विलोचनानि ॥ ७५ ॥

तस्याः करं शैलगुरूपनीतं
जग्राह ताम्राङ्गुलिमष्टमूर्त्तिः ।
उमातनौ गूढतनोः स्मरस्य
तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७६ ॥

क्षया सङ्गतिषु कातराणि चकितानि ॥ अधीरे कातर इत्यमरः । द्रष्टुमसमर्थानीति भावः । किञ्चिदीषत् व्यवस्थापितानि स्थिरीकृतानि पश्चात् संहृतानि निवर्त्तितानि चेति व्यवस्थाप्रितसंहृतानि । पूर्वकालैकत्रादिना तत्पुरुषः ॥ अन्योन्यस्मिन् लोलानि सतृष्णानि । लोलश्चलसतृष्णयोरित्यमरः । विलोचनानि हृष्टय तत्क्षणः तस्मिन् क्षणे ह्रीयन्त्रणां ह्रियानिमित्तेन स[ङ्को]चमन्वभूवन् ॥ ७५ ॥

तस्या इति । अष्टमूर्त्तिः शिवः तस्मादीश्वराच्छङ्कित इति तच्छङ्किनः तद्भीतस्येत्यर्थः अतएव उमातनौ उमाशरीरे गूढतनोः गुप्तशरीरस्य स्मरस्य पूर्वं प्ररोहमिव प्रथमाङ्कुरमिव स्थितं शैलगुरूपनीतं शैलगुरुणा हिमवतां उपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसा उपनीतं ताम्राङ्गुलिं रक्ताङ्गुलिं तस्याः पार्वत्याः करं जग्राह ॥ ७६ ॥

रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्।
वृत्तिस्तयोः पाणिसमागमेन-
समं विभक्तेव मनोभवस्य॥ ७७॥

रोमेति। उमायाः रोमोद्गमोरोमाञ्चः प्रादुरभूत् पुमान् गौः पुङ्गवोवृषभः। गोरतद्धितलुकीति टच्। स केतुश्चिह्नं यस्य स पुङ्गवकेतुः शिवः स्विन्नाङ्गुलिरासीत्। अत्रोत्प्रेक्षते पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा तयोर्वधूवरयोः मनोभवस्य वृत्तिः अवस्थिति समं विभक्तेव समीकृतेवेत्यर्थः। प्राक्सिद्धं स्याप्यनुरागसाम्यस्य सम्प्रति तत्कार्यदर्शनात् पाणि संस्पर्श कृतत्वमुत्प्रेक्ष्यते। ननु कन्या तु प्रथमसङ्गमे स्विन्नकरचरणा भवति पुमांस्तु रोमाञ्चितोभवतीति वात्स्यायनेन विपरीतमुक्तमिति चेत् नैषदोषः एभि-रनयोर्लिभं परिक्षेतेति वाक्यशेषे एभिरिति बहुवचननेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेन अनियमावधारणात्। अतएव रघुवंशे अन्यथाविधानात् स्वोक्तिविरोध इत्यापस्तम्। तदेतत् रघुवंशसञ्जीवन्यां सुव्यक्तमवोचम् सात्त्विकास्तु स्तम्भप्रलय रोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्यमित्यष्टौ सात्त्विका परिकीर्त्तिता इति॥ ७७।

प्रयुक्तपाणिग्रहणं यदन्य-
द्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सान्निध्ययोगादनयोस्तदानीं
किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८ ॥

प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्चिषस्तन्मिथुनं चकाशे ।
मेरोरुपान्तेष्विव वर्त्तमान-
मन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥

प्रयुक्तेति । यद्यस्मात् कारणात् प्रयुक्तं पाणिग्रहणं यस्य तत्तथोक्तम् । अन्यल्लौकिकं वधूश्च वरश्च वधूवरं समाहारे द्वन्द्वैकवद्भावः । तदानीं पाणिग्रहणकाले अनयोरुमाशिवयोः सान्निध्ययोगात् सन्निधिभावात् अग्र्यामुत्तमां कान्तिं शोभां पुष्यति पुष्णाति तस्यो भयस्य उमामहेश्वररूपस्य मिथुनस्य श्रीः किं कथ्यते यत् प्रसादादन्यस्य शोभालाभ तस्य शोभा किमु वक्तव्येत्यर्थः । विवाहसमये गौरीशिवौ वधूवरावनुप्रविश्य तामितयागमः ७८ ॥

प्रदक्षिणेति । तन्मिथुनम् उदर्चिषः उन्नतज्वालस्य कृशानः कर्म्मणः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणात् चकाशे । किमिव मेरोरुपान्तेषु प्रसरेषु वर्त्तमानं मेरुं प्रदक्षिणीकुर्वदित्यर्थः । अन्योऽन्येन संसक्तं संसक्तं मिथुनस्यापेत्यतत् विशेषणम् । अहश्च

तौ दम्पती त्रिः परिणीय वह्नि-
मन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधा-
स्तस्मिन् समिद्धार्चिषि लाजमोक्षम् ॥ ८० ॥
सा लाजधूमाञ्जलिमिष्टगन्धं
गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या
मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥

त्रियामा च अहस्त्रियामं रात्रिं दिवमिव । समा-
हारे द्वन्द्वैकवद्भावः ॥ ७९ ॥

ताविति । स पुरस्तादेव हितं विधत्ते इति पु-
रोधाः पुरोहितः अन्योन्यस्य संस्पर्शेन स्पर्शसुखेन
निमीलिताक्षौ तौ जाया च पतिश्च दम्पती कर्म-
भूतौ । जायाशब्दस्य दम्भावो निपातितः । वह्निं
त्रिस्त्रिवारम् । द्वित्रिचतुर्भ्यः सुजिति सुच् । परिणीय
परितो नीत्वा प्रदक्षिणे कार्यैत्यर्थः । नयतेर्द्विकर्म-
कात्ल्यप् समिद्धार्चिषि दीप्तज्वाले तस्मिन्नग्नौ वधूं
लाजमोक्षं लाजविसर्गं कारयामास । हृक्रोरन्यतर-
स्यामिति विकल्पादणिकर्तुः कर्मत्वम् ॥ ८० ॥

सेति । सा वधूः गुरोः पुरोधसः उपदेशात् इष्टो-
घ्राणतर्पण इत्यर्थः गन्धो यस्य तं लाजधूमाञ्जलिं वदनं

तदीषदार्द्रारुणगण्डलेख-
मुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्रान्तयवावतंस-
माचारधूमग्रहणाद् बभूव ॥ ८२ ॥

वधूं द्विजः प्राह तवैष वत्से
वह्निर्विवाहं प्रति कर्मसाक्षी ।
शिवेन भर्त्रा सह धर्मचर्य्या
कार्य्या त्वया मुक्तविचारयेति ॥ ८३ ॥

निनाय । कपोलसंसर्पिणी शिखा यस्य स तथोक्तः स धूमः तस्या गौर्य्याः मुहूर्त्तं कर्णोत्पलतां प्रपेदे । धूमस्य विह्वमरत्वात् मुहूर्त्तग्रहणम् ॥ ८१ ॥

तदिति । तद्वधूमुखम् आचारधूमग्रहणात् आचारप्राप्तधूमत्वात् ईषदार्द्रं स्विन्नं अरुणे च गण्डलेखे गण्डस्थले यस्य तत्तथोक्तम् अक्ष्णोरुच्छ्वासि उद्गच्छन् कालाञ्जनस्य रागोरञ्जनं यस्य तत्तथोक्तम्, क्रान्तो यवावतंसो यवाङ्कुरकर्णपुरो यस्य तत्तथाभूतं बभूव । लाजाञ्जलिं विसृजत्र धूमाग्रं जिघ्रेदिति प्रयोग वृत्तिकारः ॥ ८२ ॥

वधूमिति । अथ वधूं द्विजः पुरोधाः प्राह । किमिति हे वत्से एष वह्निः तव विवाहं प्रति विवाहकर्मणीत्यर्थः । कर्मसाक्षी कर्मद्रष्टा भर्त्रा शिवेन सह मुक्तविचारया निर्विचारया त्वया धर्मचर्य्या धर्माच-

आलोचनान्तं श्रवणे वितत्य
पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्बणतापयेव
माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥
ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८५ ॥

रणं कार्य्यं कर्त्तव्येति । अयञ्च प्राजापत्यविवाहो द्रष्टव्यः । यथाह आश्वलायनः सह धर्मञ्चरेदिति प्राजापत्य इति ॥ ८३ ॥

आलोचनान्तमिति । भवस्य पत्न्याः भवान्या । इन्द्रवरुणभवसर्वरुद्रेत्यादिना ङीप् आनुगागमश्च । आलोचनान्तं नेत्रान्तपर्य्यन्तम् आङ्मर्य्यादाभिविध्योः इत्यव्ययीभावः । श्रवणे श्रोत्रे वितत्य विस्तार्य्य तत्पूर्वोक्तं गुरोर्याज्ञिकस्य वचनं सह धर्मं चरेति वाक्यं निदाघकाले ग्रीष्मकाले उल्बणतापया उत्कट सन्तापया पृथिव्या प्रथममाद्यं माहेन्द्रं पार्ज्जन्यमम्भ इव पीतम् अत्यादरेण शुश्रावेत्यर्थः ॥ ८४ ॥

ध्रुवेणेति । प्रियं दर्शनं यस्य कर्मभूतस्य तेन प्रियदर्शनेन ध्रुवेण शाश्वतेन भर्त्रा ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय । ध्रुवोभभेदे क्लीवन्तु निश्चिते शाश्वते

इत्थं विधिज्ञेन पुरोहितेन
प्रयुक्तपाणिग्रहणोपचारौ।
प्रणेमतुस्तौ पितरौ प्रजानां
पद्मासनस्थाय पितामहाय ॥ ८६ ॥
वधूर्विधात्रा प्रतिनन्द्यते स्म
कल्याणि वीरप्रसवा भवेति।
वाचस्पतिः सन्नपि सोऽष्टमूर्त्तौ
त्वाशास्यचिन्तास्तिमितो बभूव ॥ ८७ ॥

त्विष्वितयमरः। प्रयुज्यमाना हृश्यतामिति प्रेर्यमाणा
क्लीसन्नकण्ठो क्रिया हीनस्वरा सा वधूः कथमपि
आननमुन्नमय्य हृष्ट इत्युवाच ॥ ८५ ॥

इत्यमिति। इत्थमनेन प्रकारेण। इदमस्थमुरिति थमुप्रत्ययः। विधिज्ञेन विवाहप्रयोगेन शास्त्रज्ञेनेत्यर्थः। पुरोहितेन हैमवतेन प्रयुक्तपाणिग्रहणोपचारौकृतविवाहकर्माणौ प्रजानां पितरौ तौ उमामहेश्वरौ पद्मासनस्थाय पद्मासनोपविष्टाय पितॄणां पित्रे पितामहाय ब्रह्मणे। पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि चेति विश्वः। पितृव्यमातुलमातामहपितामहा इति निपातनात्साधु। प्रणेमतुः नमश्चक्रतुः।पितामहः पित्रोरपि पूज्य इति भावः॥८६॥

वधूरिति। वधूः कन्या विधात्रा ब्रह्मणा हे कल्याणि! शोभने वीरः प्रसवोऽपत्यं यस्याः सा वीर-

क्लृप्तोपचारां चतुरस्रवेदीं
तावेत्य पश्चात् कनकासनस्थौ।
जायापती लौकिकमेषणीय-
मार्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥
पत्रान्तलग्नैर्जलविन्दुजालै-
राकृष्टमुक्ताफलजालशोभम्।

प्रसवा वीरसूर्भवेति प्रतिनन्द्यते स्म आशिषमुक्तेत्यर्थः। स विधाता वाचस्पतिः वागीश्वरोऽपि सन्। कस्कादिषु पाठात्साधु। अष्टमूर्त्तौ शिवे तु आशास्यम् आकाङ्क्ष्यं तत्र चिन्ताविचारः तस्यां स्तिमितोमन्दो-बभूव। तस्य निरीहस्याशास्याभावादाशिषि स्तिमितत्वमित्यर्थः ॥ ८७ ॥

क्लृप्तेति। तौ जायापती वधूवरौ पश्चान्नमस्कारानन्तरं क्लृप्ता रचिता उपचाराः पुष्परचनादयो यस्यां तां चतुरस्रवेदीम् एत्य प्राप्य कनकासनस्थौ सन्तौ लौकिकं लोके विदितम् आचारप्राप्तमित्यर्थः अतएव एषणीयम् आशासत्रम्। तथापि लौकिकाचारं मनसापि न लङ्घयेदिति शास्त्रादवश्यकर्त्तव्यमित्यर्थः। इषेरिच्छार्थादनीयर् प्रत्ययः। आर्द्राक्षतारोपणम् अन्वभूताम् ॥ ८८ ॥

पत्रान्तेति। लक्ष्मीः श्रीदेवी पत्रान्तेषु दलप्रान्तेषु लग्नैर्जलविन्दुजालैः आकृष्टा आहृता मुक्ता-

तयोरुपर्य्यायतनालदण्ड-
माधत्त लक्ष्मीः कमलातपत्रम् ॥ ८९ ॥

द्विधा प्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं
वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥

तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिबद्धरागम् ।

फलजालेन प्रान्तलम्बिना मुक्ताकलापेन या शोभा सा येन तत्तथोक्तम् आयतं दीर्घं नालमेव दण्डोयस्य तत् कमलमेवातपत्रं तत् तयोः उपरि आधत्त दधौ ॥ ८९॥

द्विधेति । अथ सरस्वती वाग्देवी द्विधा संस्कृत-प्राकृतरूपेण द्वैविध्येन प्रयुक्तेन उच्चारितेन वाङ्मयेन शब्दजालेन तन्मिथुनं नुनाव तुष्टाव । णु स्तुताविति धातोर्लिट् । केन कमितव्याह संस्कारेति संस्कारेण शास्त्रव्युत्पत्त्या पूतेन प्रकृतिप्रत्ययविभागशुद्धेन संस्कृतेनेत्यर्थः ।वरेण्यं वरणीयं श्लाघ्यमित्यर्थः ।वृणो तेरौणादिकएण्यप्रत्ययः । वरं वोढारं शिवम् । सुखेन ग्राह्यं सुबोधं निबन्धनं रचना यस्य तेनवाङ्मयेनप्रा-कृत भाषयेत्यर्थः वधूं नुनावेत्यनेन सम्बन्धः ॥ ९० ॥

ताविति । तौ दम्पती सन्धिषु मुखादिनिर्व्वह-णान्तेषु पञ्चसन्धिषु । तदुक्तं दशरूपके । मुखं प्रति-

अपश्यतामप्सरसां मुहूर्त्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१ ॥

मुखं गर्भः सावमर्षोपसंहृतिरिति । व्यञ्जितवृत्तिभेदं स्फुटोकृतकौशिक्यादिवृत्तिविशेषं रसानुगुण्येनेति शेषः । तदुक्तं भूपालेन कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्वती । रौद्रविभत्सयोर्वृत्तिर्नियतारभटी पुनः । शृङ्गारादिषु सर्व्वेषु रसेष्विष्टा तु भारती । तथा । कौशिक्यारभटी चैव सात्वती भारती तथा । चतस्रोवृत्तयोज्ञेया यासु नाट्यं प्रतिष्ठितमिति । रसान्तरेषु शृङ्गारादिरसभेदेषु शृङ्गारादौ विषवीर्य्येत्र गुणे रागे द्रवे रसइत्यमरः । शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताख्यारसाः पूर्व्वै-रुदाहृताइति । प्रतिबद्धरागं प्रतिनियमेन प्रवर्त्तितः वसन्तललितादिरागो यस्मिन् तं यस्मिन् रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः । यथाह काहलः । रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते । शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्त्तिताः । भयानके च बीभत्से शान्ते गेयो नपुंसकइति । ललिताङ्गहारं मधुराङ्गविक्षेपम् । अङ्गहारोऽङ्गविक्षेप इत्यमरः । आद्यं भवमाद्यं रूपमान्तरप्रकृतिभूतमित्यर्थः । तदुक्तम् । आद्यः प्रकरणादीना नाटकं प्रकृतिं बुधा इति । अप्सरसामुर्वश्यादीनां प्रयुज्यतइति प्रयोगो रूपकं नाटकमित्यर्थः आद्यमिति विशेषणात् । तं

देवास्तदन्ते हरमूढभार्यं
किरीटबद्धाञ्जलयो निपत्य ।
शापावसाने प्रतिपन्नमूर्त्ते
र्ययाचिरे पञ्चशरस्य सेवाम् ॥ ९२ ॥

तस्यानुमेने भगवान् विमन्यु-
र्व्यापारमात्मन्यपि सायकानाम् ।
कालप्रयुक्ता खलु कार्य्यविद्भि-
र्विज्ञापना भर्त्तृषु सिद्धिमेति ॥ ९३ ॥

मुहूर्त्तमपश्यतां दृष्टवन्तौ। पाघ्राध्मास्थेत्यादिना दृशेः पश्यादेशः ॥ ९१ ॥

देवा इति । देवा इन्द्रादयः तदन्ते तस्य प्रयोगदर्शनस्यान्ते अवसाने ऊढभार्यं परिणीतदारं हरं किरीटेषु बद्धाः अञ्जलयो येषान्ते तथोक्ता सन्तः निपत्य प्रणम्य शापावसाने प्रतिपन्नमूर्त्तेर्लब्धशरीरस्य परिणेष्यति पार्ब्बतीं यदेत्यादिना शापस्य पार्वती परिणयान्तत्वादित्यर्थः। पञ्चशरस्य कामस्य कर्त्तुः सेवां ययाचिरे । पुनः समासादितशरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुरित्यर्थः । दुह्याच्पचिजित्यादिना द्विकर्म्मकत्वम् ॥ ९२ ॥

तस्येति । विमन्युः विगतक्रोधो भगवान् ईश्वरः आत्मन्यपि तस्य कामस्य सायकानां व्यापारमनुमेने । तथाहि कार्य्यविद्भिः कार्य्यज्ञैः अथवा कालविद्भिः

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण ।
कनककलसयुक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥ ९४ ॥

अवसरज्ञैः काले योग्यावसरे प्रयुक्ता अनुष्ठिता भर्तृषु स्वामिषु विषये विज्ञापना सिद्धिमेति खलु सफला भवतीत्यर्थः । अयमेवास्य स्मरसेवास्वीकारः यदात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति ॥ ९३ ॥

अथेति । अथेन्दुमौलिः ईश्वरः तान् विबुधगणान् विसृज्य क्षितिधरपतिकन्यां पार्वतीं करेण आददानः ; कनककलसयुक्तं मङ्गलार्थमन्तर्निहित हेममयपूर्णकुम्भं भक्तयः पुष्पादिरचनाः तासां शोभया सनाथं सहितमित्यर्थः । क्षितिविरचितशय्यं क्षितिविरचिता स्थण्डिलकल्पिता शय्या तल्पं यस्मिन् तत्तथोक्तम् । कौतुकागारमागात् शय्यागृहं जगाम । अत्राश्वलायनः । अत ऊर्ध्वमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्यातामिति । अत ऊर्ध्वं विवाहादूर्ध्वम् आ त्रिरात्रादिति शेषः त्रिरात्रं द्वादशरात्रं वेति वचनात् । तथा कामशास्त्रेऽपि । अथ परिणयरात्रौ प्रक्रमनैव किञ्चित्तिसृषु च रजनीषु स्तब्धभावा दुनोति । त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्यं न चास्या हृदयमनुरुध्य स्वेच्छया नर्म कुर्यात् ॥ ९४ ॥

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः।
अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम्॥ ९५॥

इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये उमापरिणयोनाम सप्तमःसर्गः।

नवेति। तत्र कौतुकागारे ईशः ईश्वरः नवपरिणयेन नवोद्वाहेन या लज्जा सा भूषणं यस्यास्ताम् अतएव तेनेश्वरेण कृताक्षेपं कृताकर्षणम् उन्नमितमिति यावत् वदनमपहरन्तीं पराचीं कुर्व्वतीम् अयं लज्जानुभावः। अनुभावान्तरमाह। शयनसखीभ्योऽपि शयने सहशायिनीभ्योऽपि नर्मसहचरीभ्योऽपीत्यर्थः। कथञ्चित् कृच्छ्रेण दत्तवाचं दत्तोत्तरां गौरीं प्रमथाः भृङ्गिकिरीटिप्रभृतयः हास्यरसाधिदेवताः पशुपतेः पारिषदाः। यथाह भरतः। शृङ्गारो विष्णुदैवत्योहास्यः प्रमथदैवतइति। प्रमथा स्युः पारिषदाइत्यमरः। तेषां मुखविकारैः मुखविकृतचेष्टितैः गूढमप्रकाशं हासयामास हासाद्युपायैर्लज्जामपाकर्तुं प्रवृत्तइत्यर्थः; यथाह गोनर्द्दः। हासेन मधुना नर्मवचसा लज्जितां प्रियाम्। विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैरिति॥ ९५॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथ
सूरिविरचितायां कुमारसम्भवव्याख्यायां
सञ्जीवनीसमाख्यायां सप्तमःसर्गः।